'ऊढि' इति ण्यन्ताल्लुङि तिपि आटि वृद्धौ 'औढि अ त्' इति स्थिते कार्यासिद्धत्व-पक्षे ढत्व-धत्व-ष्टुत्व-ढलोपादीनामसिद्धत्वात् 'हृति' शब्दस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'कुहोश्चुः' इति हस्य चुत्वे 'औजि हृति अ त्' इति स्थिते "णेरनिटि" इत्यनेन णिलोपे 'औजि हृ त् अत्' इति स्थिते ढत्व-धत्व-ष्टुत्व-ढलोपेषु कृतेषु 'औजिढत्' इति सिद्धम्। अत्र "ढ्रलोप" इति दीर्घस्तु न "ह्रस्वः" इत्यनेन ह्रस्वत्वे फलाऽभावात्।

३—कथन्तर्हि विस्मापयन्निति—'विस्मापयन् विस्मृतमात्मवृत्तौ' इत्यत्र मनुष्यवाचेति करणेनैव राज्ञो विस्मय इति सिंहरूपप्रयोजकाद्विस्मयाभावेन "नित्यं स्मयतेः" इति सूत्राप्रवृत्तौ आत्वाभावेन पुग् न स्यात्। यदि प्रयोजकाद् विस्मयः स्वीक्रियते, तदा "भीस्म्योर्हेतुभये" इत्यात्मनेपदमपि स्यात्। एवञ्च शतृप्रत्ययुक्तं रूपमनुपपन्नं भवतीति सन्देहावसरे 'विस्मापयन्' इत्येव पाठ इति साम्प्रदायिकाः।

अथवा—राजा विस्मयते, मनुष्यवाक् प्रेरयतीति मनुष्यवाक् राजानं विस्मापयते इति, तां मनुष्यवाचं सिंहः प्रेरयतीति सिंहः तया राजानं विस्मापयन्निति ण्यन्ताण्णौ मनुष्यवाक्रूपप्रयोजकाद् विस्मयो विद्यत इत्यात्वादिकार्यं सुलभमिति दिक्।

अवगल्भाञ्चक्रे—अवगल्भा(यः पचाद्यजन्ताः। क्विप्सन्नियोगेनाऽनुदात्तत्वमनुनासिकत्वं चाऽच्प्रत्ययस्य प्रतिज्ञायते। न चाऽत्र क्विप्प्रत्ययसन्नियोगेन अच्प्रत्ययस्याऽनुनासिकत्वादिनिपातनाद् गल्भादिघटकाकारस्य लोपे अनेकाच्त्वाऽभावेन आम् न स्यादिति वाच्यम्! "साम्प्रतिकाभावे भूतपूर्वगतिरा-श्रीयते इति परिभाषया आम्प्रत्ययस्य सिद्धत्वात्। उक्तवचने प्रमाणञ्च—"आचारेऽवगल्भ" इत्यादि वार्तिकमेव। नचारेऽर्थे 'अवगल्भते' इत्यादावात्मनेपदार्थं वार्तिकं सार्थकमिति वाच्यम्? "धातूनामनेकार्थाः" इति वचनेन प्रत्ययरहितगल्भादिधातोरप्याचारार्थे शक्तिप्रदर्शनादवगल्भते इत्यादौ तङः सिद्धत्वात्। वार्तिके अवोपसर्गविशिष्टपाठसामर्थ्येन केवलगल्भादिधातोः उपसर्गान्तरविशिष्टाच्च गल्भादिधातोः क्यङेव भवतीति माधवादयः। परञ्च क्यङ्-क्विपोर्नास्ति विवादो द्वाभ्यामपि भाव्यम्, किन्तु अवोपसर्गरहितो गल्भादिभ्यः क्विपि सति परस्मैपदमेव स्यान्नत्वात्मनेपदमित्येव वक्तुं युक्तम्। वार्तिकस्य मुख्यप्रयोजनं प्रयोगे आम्प्रत्ययस्य सिद्धिः। आत्मनेपदं तु गौणफलमिति दिक्।

४—'तुरण त्वरायाम्'—अस्माद्धातोर्यकि सनि लुङि प्रथमपुरुषैकवचने 'अतुतुरणिषीत्' इति। तथाहि—"कण्ड्वादिभ्यो यक्" इति यकि अतो लोपे 'तुरण्य' इति। तस्मात् सनि सनः आर्धधातुकत्वादिटि "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे "यस्य हलः" इत्यनेन यलोपे "अतो लोपः" इत्यनेन अलोपे 'तुतुरणिस' इति स्थिते सन्नन्तस्य धातुत्वाल्लुङि प्रथमपुरुषैकवचने तिपि अडागमे मध्ये च्लौ तस्य सिचि 'अतुतुरणिस स त्' इति स्थिते सस्य "आर्धधातुकस्येड्वलादेः" इत्यनेन इटि तस्य "अस्तिसिचोऽपृक्ते" इत्यनेन ईटि "इट ईटि" इत्यनेन सलोपे सस्य षत्वे अलोपे 'अतुतुरणिषीत्' इति सिद्धम्।

लुटि तु—"तुतुरणिषिता" इति। तथाहि—'तुरण' इत्यस्माद्धातोर्यकि अतो लोपे 'तुरण्य' इति। तस्मात् सनि इटि द्वित्वादिकार्ये यलोपे अतो लोपे सन्नन्तस्य धातुत्वाल्लुटि प्रथमपुरुषैकवचने तिपि तासिप्रत्यये तिपो डादेशे डित्वाट्टिलोपे "आर्धधातुकस्येड्वलादेः" इत्यनेन इटि षत्वे 'तुतुरणिषिता' इति।

'वरण गतौ'—अस्माद्धातोर्यकि सनि लुङि प्रथमपुरुषैकवचने 'अवीवरणिषीत्' इति। तथाहि—वरणधातोः 'कण्ड्वादिभ्यो यक्' इति यकि अतो लोपे 'वरण्य' इति। तस्मात् सनि सनः आर्धधातुकत्वादिटि "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे "सन्यतः" इत्यनेन अभ्यासस्यातः इत्वे "दीर्घोलघोः" इति दीर्घे "यस्य हलः" इत्यनेन यलोपे "अतो लोपः" इत्यनेन अलोपे 'वीवरणिस' इति स्थिते सन्नन्तस्य धातुत्वाल्लुङि प्रथमपुरुषैकवचने तिपि अडागमे मध्ये च्लौ तस्य सिचि "आर्धधातुकस्येड्वलादेः" इत्यनेन सस्य इटि 'अस्तिसिचोऽपृक्ते' इत्यनेन तस्य ईटि "इट ईटि" इति सलोपे अलोपे षत्वे 'अवीवरणिषीत्' इति सिद्धम्।

लुटि तु—"वीवरणिषिता" इति बोध्यम्। साधनप्रकारस्तु लुटि पूर्ववत्।

तोरणाविति—अस्योत्तरं ४१ वर्षे द्रष्टव्यम्।

५—निगारयति—'नि' इत्युपसर्गात् णयन्तात् 'गॄ' धातोः "निगरणचलनार्थेभ्यश्च" इति सूत्रेण परस्मैपदे शबादिकार्ये 'निगारयति' इति सिद्धम्।

गाङ्जानीते—अस्योत्तरं ३७ वर्षे द्रष्टव्यम्।

स्मारिता—स्मृधातोः कर्मणि लुटि परत्वान्नित्यत्वाच्च गुणे रपरे कृतेऽजन्तत्वाऽभावेऽप्युपदेशग्रहणात् "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झन-

ग्रहदृशां वा चिण्वदिट् च" इत्यनेन चिण्वदिटि च कृते णित्वादुपधावृद्धौ 'स्मारिता' इति। चिण्वद्भावाभावपक्षे 'स्मर्ता' इति।

दायिता—दाधातोः कर्मणि लुटि "स्यसिजि"ति चिण्वदिटि च कृते "आतो युक् चिण्कृतोः इत्यनेन युकि 'दायिता' इति। चिण्वद्भावपक्षे 'दाता' इति।

तपस्तपःकर्मकस्यैव—अस्योत्तरं ३६ वर्षे द्रष्टव्यम्।

६—अन्योन्यं स्पृशतः—अत्र "सकर्मकाणां प्रतिषेधो वक्तव्यः" इति वार्तिकेन कर्मवत्त्वप्रतिषेधे 'स्पृशतः' इति। कर्मवत्त्वे तु 'स्पृश्येते' इति स्यात्।

वसन्तीह पुरा—अस्योत्तरं ४१ वर्षे द्रष्टव्यम्।

आशंसेऽधीयीय—गुरुरुपेयाच्चेदाशंसे 'अधीयीय'। अत्र "आशंसावचने लिङ्" इति सूत्रेण भविष्यत्यर्थे लिङ्।

सम्भावयामि भुञ्जीत—अत्र "विभाषा धातौ सम्भावनवचनेऽयदि" इति सूत्रेण सम्भावनेऽर्थे विभाषया लिङि 'भुञ्जीत' इति। लिङभावे 'भोक्ष्यते, इति 'वा' भवति।

भविष्यति मर्यादावचनेऽवरस्मिन्—भविष्यति काले मर्यादोक्तावयवरस्मिन् प्रविभागेऽनद्यतनवन्न भवतीति सूत्रार्थः। योऽयमध्वा गन्तव्य आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून् 'पास्यामः' इत्युदाहरणम्। अत्र कौशाम्ब्या इति मर्यादा गम्यते, अवरमित्यनेन अवरत्वं गम्यते तेन भविष्यत्यनद्यतने लुटं प्रबाध्य लृडेव भवतीति।

समुच्चये सामान्यवचनस्य—समुच्चये लोड्विधौ सामान्यार्थकस्य धातोरनुप्रयोगः स्यादिति सूत्रार्थः। सक्तून् पिब, धानाः खादेत्यभ्यवहरततीत्याद्युदाहरणम्।

७—प्रपवणीयः—प्रपूर्वकात् ङकारेत्संज्ञक 'पू' धातोः धातोः तव्यत् तव्य अनीय -प्रत्ययाः स्युरित्यर्थकेन "तव्यत्तव्यानीयरः" इत्यनेन अनीयर् प्रत्यये अनुबन्धलोपे उकारस्य गुणे अवादेशे 'प्रपवनीय' इति स्थिते उपसर्गस्थान्निमित्तात्परस्याऽच उत्तरस्य कृत्यस्य नस्य णत्वं स्यादित्यर्थकेन "कृत्यचः" इति सूत्रेण णत्वे कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ तस्य रुत्वे विसर्गे 'प्रपवणीयः' इति सिद्धम्। "न भाभूपूकमिगमिप्यायीवेपाम्" इति सूत्रे "पूञ एवेह ग्रहणमिष्यते" इति वार्तिकोक्त्या अत्र णत्वनिषेधो न।

**उपसर्या**—गर्भाधानार्थं वृषभेणोपगन्तुं योग्या गौरित्यर्थः। अत्र उपोपसर्गात् 'सृ' धातोः गर्भग्रहणे प्राप्तकाला स्त्रीपशुव्यक्तिर्विवक्षिता चेदुपसर्या इति निपात्यते इत्यर्थक "उपसर्या काल्या प्रजने" इति सूत्रेण ण्यत्प्रत्ययं प्रबाध्य निपातनात् यत्प्रत्यये गुणे स्त्रीत्वाट्टापि कृदन्तत्वात् सौ तस्य हल्ङ्यादिना लोपे 'उपसर्या' इति जातम्।

**शिष्यः**—शास् धातोः एति-स्तु-शास्-वृ-दृ-जुषेभ्यः क्यप् स्यादित्यर्थक-"एतिस्तुशास्वृदृजुषः क्यप्" इति सूत्रेण क्यपि अनुबन्धलोपे शास उपधाया इत्स्यादङि हलादौ क्ङिति चेत्यर्थक "शास इदङ्हलोः" इति सूत्रेण इत्वे षत्वे कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'शिष्यः' इति सिद्धम्।

**अरविन्दम्**—अराणि विन्दतीत्यर्थे गवादिषु उपपदेषु शो वाच्य इत्यर्थक "गवादिषु विन्देः संज्ञायाम्" इति वार्तिकेन कर्मण्यणं प्रबाध्य शप्रत्यये उपपदसमासे कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'अरविन्दः' इति।

**सुखप्रतीक्षा**—सुखं प्रतीक्षते इत्यर्थे कर्मण्युपपदे ईक्षिक्षमिभ्यां च णः स्यादित्यर्थक "ईक्षिक्षमिभ्यां च" इति वार्तिकेन कर्मण्यणं प्रबाध्य णप्रत्यये उपपदसमासे टापि विभक्त्यादिकार्ये 'सुखप्रतीक्षा' इति।

**"न क्वादेः"**—इत्यस्य प्रत्याख्यानप्रकारः ३६ वर्षे द्रष्टव्यः।

**८—ग्रामगः**-ग्रामं गच्छतीति विग्रहे "अन्यत्राऽपि दृश्यत इति वक्तव्यम्" इति वार्तिकेन ग्राममित्युपपदेष्वपि गम्धातोर्डप्रत्यये डित्वसामर्थ्यादभस्यापि टेर्लोपे उपपदसमासे विभक्त्यादिकार्ये 'ग्रामगः' इति जातम्।

**तमोऽपहः**—तमांसि अपहन्तीत्यर्थे कर्मण्युपपदे अपपूर्वात् हन्धातोः "अपे: क्लेशतमसोः" इत्यनेन डप्रत्यये डित्वादभस्यापि टेर्लोपे उपपदसमासे विभक्त्यादिकार्ये 'तमोऽपहः' इति।

**आढ्यम्भावुकः**—(अनाढ्यः) आढ्यो भवतीत्यर्थे "कर्तरि भुवः खिष्णुच्-खुकञौ" इत्यनेन खुकञ्प्रत्यये खञावितौ खित्वान्मुमि ञित्वाद्वृद्धौ आवादेशे विभक्त्यादिकार्ये 'आढ्यम्भावुकः' इति सिद्धम्।

**दूनवान्**—'दूङ् परितापे' अस्मात् 'कर्तरि कृदि'ति कर्तरि क्तवतुप्रत्यये अनुबन्धलोपे "क्तक्तवतू निष्ठा" इत्यनेन निष्ठासंज्ञायाम् "ओदितश्च" इत्यनेन निष्ठातस्य नत्वे 'दूनवत्' इति स्थिते कृदन्तत्वात् सौ उगित्वान्नुमि नान्तत्वाद् दीर्घे हल्ङ्यादिना सुलोपे 'दूनवान्' इति। नच ओदित्वाऽभावात् 'ओदितश्चे'

इत्यनेन कथं नत्वमिति वाच्यम् ? 'पूङ्प्राणिप्रसवे' इत्याद्या नव धातवः ओदितः, इति दिवादिगणोक्तेऽस्य पाठात् ।

**नुन्नः**—प्रेरणार्थक 'णुद्' धातोः 'णो नः' इत्यनेन नत्वे 'नुद्' इति। तस्मात् क्तप्रत्यये 'नुद्त' इति स्थिते "नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्" इत्यनेन निष्ठा० तस्य नत्वे धातोर्दस्याऽनुनासिके कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'नुन्नः' इति। नत्वाऽभावे 'नुत्तः' इति ।

**आरिवान्**—'ऋ' धातोर्लिटि तत्स्थाने "लिटः कानज्वा, क्वसुश्च" इत्यनेन क्वसुप्रत्यये "ऋच्छत्यृताम्" इत्यनेन गुणे कृते द्वित्वाऽभ्याससंज्ञाहला० दिशेषाऽभ्यासदीर्घसवर्णदीर्घेषु कृतेषु "वस्वेकाजाद्घसाम्" इत्यनेन इटि कृद-न्तत्वात् सौ 'आरिवस्' इति स्थिते उगित्वान्नुमि संयोगान्तलोपे हल्ङ्या-दिना सलोपे नान्तत्वाद् दीर्घे 'आरिवान्' इति जातम् ।

**बिभ्राणः**—'डुभृञ् धारणपोषणयोः' अस्मात् कर्तरि "ताच्छील्यवयोवचन-शक्तिषु चानश्" इति सूत्रेण चानश्प्रत्यये अनुबन्धलोपे शित्वात् सार्वधातुकसं-ज्ञायां शपि तस्य श्लौ "श्लौ" इत्यनेन द्वित्वे अभ्याससंज्ञायाम् "उरत्" इत्यनेन अत्वे हलादिशेषे "अभ्यासे चर्च" इत्यनेन जश्त्वे "भृञामित्" इत्यनेन इत्वे 'बिभृ आन' इति स्थिते यणि णत्वे कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'बिभ्राणः' इति । ( चानशो लादेशत्वाऽभावादनात्मनेपदत्वात् परस्मैपदिभ्योऽपि प्रवृत्तिः )

**गत्यर्थाऽकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च**—अत्र सूत्रे 'लः कर्मणि च भावे चे' त्यतो भावे कर्मणीति, 'आदिकर्मणि क्तः कर्तरि चे' त्यतः कर्तरि इति चानुवर्तते । तेन भावे, कर्मणि, कर्तरि चाऽर्थे अस्य प्रवृत्तिः ।

९—**अर्हन्**—'अर्ह पूजायाम्' अस्माद्धातोः "अर्हः प्रशंसायाम्" इति सूत्रेण शतृप्रत्यये उगित्वान्नुमि संयोगान्तलोपे कृदन्तत्वात् सौ तस्य लोपे 'अर्हन्' इति ।

**स्तवः**—'स्तु' धातोः 'ऋदोरप्' इति सूत्रेण अप्प्रत्यये गुणेऽवादेशे कृद-न्तत्वात् सौ रुत्वे विसर्गे 'स्तवः' इति ।

**विशयः**—"व्युपयोः शेते पर्याये" इति सूत्रस्य प्रत्युदाहरणमेतत् । तत्र हि पर्यायः = प्राप्ताऽवसरता । एवञ्च 'पर्याये' इत्यस्य ग्रहणाभावे-वि-उप, इत्युपपद-योः शीङ्धातोर्घञ्स्यादित्यर्थे संशयार्थेऽपि 'विशयः' इत्यत्र घञापत्तौ 'विशायः' इति स्यात् ।

**प्रधिः**—प्रोपसर्गात् घुसंज्ञकधाधातोः "उपसर्गे घोः किः" इति सूत्रेण

कप्रत्यये "आतो लोप इटि च" इत्यनेन आलोपे कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'प्रधिः' इति ।

**पूनिः**—ऊकारेत्संज्ञक 'पू' धातोः "ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः" इति वार्तिकेन क्तिन्प्रत्यये अनुबन्धलोपे "ल्वादिभ्यः" इत्यनेन तकारस्य नत्वे कृदन्तत्वात् सौ रुत्वे विसर्गे 'पूनिः' इति ।

**अजीवनिः**—आक्रोशे गम्यमाने सति नञुपपदात् 'जीव' धातोः "आक्रोशे नञ्यनिः" इति सूत्रेण अनिप्रत्यये कृदन्तत्वात् सौ रुत्वे विसर्गे 'अजीवनिः' इति । अजीवनमित्यर्थः ।

**लवणङ्कारं भुङ्क्ते**—अत्र लवणशब्दः स्वादुपर्यायः । तेन स्वादुपर्यायात् लवणपूर्वपदात् कृ धातोः "स्वादुमि णमुल" इति सूत्रेण णमुल् प्रत्यये पूर्वपदस्य निपातनान्मान्तत्वे णित्वाद्वृद्धौ मस्य अनुस्वारे परसवर्णे कृदन्तत्वात् सौ हल्ङ्यादिना सुलोपे 'लवणङ्कारम्' इति ।

**दण्डोपघातम्**—दण्डेनोपघातं 'दण्डोपघातम्' । अत्र "हिंसार्थानां च समानकर्मकाणाम्" इत्यनेन 'दण्डेन' इति तृतीयान्ते उपपदे 'उप' इत्युपसर्गपूर्वकात् 'हन्' धातोर्णमुल् प्रत्यये णित्वाद्वृद्धौ हस्य कुत्वेन घत्वे नकारस्य तकारादेशे कृदन्तत्वात् सौ हल्ङ्यादिना सुलोपे 'दण्डेन उपघातम्' इति स्थितौ 'तृतीया प्रभृतीन्यन्यतरस्याम्' इत्यनेन पाक्षिके समासे 'आद्गुणः' इत्यनेन गुणे 'दण्डोपघातम्' इति ।

---

## णिजन्तादि-उत्तरकृदन्तान्तभागे प्रश्नाः

१९३४

१—शिव-वा-धातोर्णौ, ग्रह-दिव् धातोः सनि, अश्-ग्रह् धातोर्यङि च सूत्रनिर्देशं विनैवैकैकं रूपं प्रदर्श्य—उपधाकार्यं छित्वात् प्रबलमिति पङ्क्तिर्व्याख्येया ।

२—अज्-ज्वरधातोः रूपे यङ्लुकि विचार्य्य विद्वच्छब्दात् क्यङि लटस्तिपि ते च कीदृग् रूपाणि इति लेखनीयम् ।

३—मेधारत्योर्यकि लिटि प्रथमपुरुषबहुवचने अपोपसृष्टकिरतेर्लुङि तिपि च रूपाणि संस्कृत्य आक्रमते । परिमृष्यति । विवदन्ते । उपक्रमते । संगिरते । एषु विशेषकार्याणि वदत ।

४—बुभूषिष्यते । दायिषीष्ट । श्वः शीघ्रं वक्ष्यामः । जगाम किम् । एतानि विशेषकार्यविधायकसूत्रोपन्यासमुखेन साधयित्वा कर्मवत्कर्मणेति सूत्रे कर्मणेति किमिति किमुक्तं लिखत ।

५—इह भुञ्जीत भवान् । प्रवपणीयम् । पण्या । लभ्यम् । पापचकः । गायनः । एषु विशेषकार्यं प्रदर्श्य दिवाविभेति सूत्रं सकलं सोदाहरणं विचार्य लिखत ।

६—कालिमन्या । शीतभोजी । दूनः । अभिशीनः । स्वान्तम् । मूर्त्तः । ग्लानः । एतानि साधयित्वा हस्-धातोर्भावकर्मणोः के को विशेष इति स्पष्टमभिधीयताम् ।

७—शक्नोति भोक्तुम् । स्फालः । पूनिः । भुक्त्वा व्रजति । जरीत्वा । एतेषु चतुर्णां तत्तद्विशेषसूत्रोपन्यासमुखेन साधुत्वं प्रतिपाद्यताम् ।

## प्रश्नोत्तराणि ।

१—'टु ओ श्वि गतिवृद्ध्योः—अस्माण्णिचि लटि तिपि 'श्वाययति' इति सिद्धं रूपं भवति ।

'वा' धातोः—कम्पेऽर्थे णिचि लटि तिपि 'वाजयति' इति । भिन्नार्थे तु 'वापयति' इति ।

'ग्रह' धातोः—सनि लटि तिपि 'जिघृक्षति' इति ।

'दिव्' धातोः—सनि लटि तिपि 'दुद्यूषति-दिदेविषति' इति ।

'अश्' धातोः—यङि लटि 'अशाश्यते' इति ।

'ग्रह' धातोः—यङि लटि 'जरीगृह्यते' इति ।

उपधाकार्यं द्वित्वात्प्रबलम्—अयम्भावः—इष् धातोः सनि इटि कृते हलादित्वाऽभावेन "रलो व्युपधाद्धलादेः संश्च" इत्यनेन कित्वाऽप्राप्तौ गुणे 'एष् इ स' इति स्थिते 'अजादेर्द्वितीयस्य' इत्युक्तत्वात् 'षिस्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे सनः सकारस्य षत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'एषिषिषति' इति रूपं सिद्धम् । नन्विह सत्यपि कित्वे नित्यत्वात् परमपि गुणं बाधित्वा 'षिस्' इत्यस्य द्वित्वे धात्ववयवस्य इकारस्य उपधात्वाऽभावादेव गुणाऽप्रसक्तेर्हलादेरिति व्यर्थमिति चेन्न, इह नित्यमपि द्वित्वं गुणेन बाधते, "उपधाकार्यं हि द्वित्वात् प्रबलम्—ओणेॠदित्करणस्य सामान्यापेक्षज्ञापकात् ।

तथाहि 'ओणृ' धातोः णयन्ताल्लुङि चङि "णौ चङ्युपधाया: ह्रस्वः" इति ह्रस्वस्य "नाग्लोपिशास्वृदिताम्" इति निषेधे सति 'ओणि अ त्' इति स्थिते 'णि' शब्दस्य द्वित्वे 'माभवानोणिणत्' इति रूपम् । अत्रोपधाह्रस्वनिषेधार्थमोणेः ऋदित्करणम् । उपधाह्रस्वे कृते तु 'उण् इ अ त्' इति स्थिते 'णि' शब्दस्य द्वित्वे 'माभवानुणिणत्' इति स्यात् । ओकारो न श्रूयेत । यदि तु नित्यत्वाद्धुपधाह्रस्वात् प्रागेव 'ओण् इ अ त्' इति दशायां द्वित्वं स्यात्, तदा ओकारस्योपधात्वाभावादेव ह्रस्वाऽप्रसक्तेस्तन्निषेधार्थम् ऋदित्करणमनर्थकं स्यात् । तस्मादुपधाह्रस्वात्मकम् उपधाकार्यं द्वित्वात्प्रबलमिति विज्ञायते ।

२—अज्धातोः—यङ्लुकि 'वेवीयते' इति । नच 'अज्' धातोः हलादित्वाऽभावात् "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यस्य कथं प्रवृत्तिरिवाच्यम् ? "अजेर्व्यघञपोः" इति वीभावविधावनुवृत्तार्धधातुके विषयसप्तम्याश्रयणेन यङि विवक्षिते सत्येव अजेर्वीभावे कृते हलादित्वस्य जागरूकत्वात् । ननु अजेर्वीभावानन्तरं यङि सति तस्य "यङोऽचि च" इत्यनेन लुक् कुतो नेति चेन्न लुका लुप्तयङो भाविज्ञानविषयत्वाऽभावेन वीभावस्याऽप्रवृत्तेः । एवञ्चार्धधातुक इति विषयसप्तम्याश्रयणान्न यङ्लुगिति तत्त्वम् । प्रत्ययलक्षणन्तु न, 'न लुमतेति निषेधात् ।

ज्वर् धातोरिति—'ज्वर्' धातोर्यङ्लुक् भवतीति माधवादयः । नच "यकारवकारान्तानां तूठ्भाविनां यङ्लुङ् नास्ती" ति ज्ञापनात् 'ज्वरत्वरे'त्यूठ्भाविनो ज्वर्धातोर्यङ्लुक् कथं स्यादिति वाच्यम् ? उक्तज्ञापकं "च्छ्वोः शूड्" इत्यनेन यत्रोठ् प्रवर्तते तत्रैव तज्ज्ञापकस्योक्तसूत्रस्य भाष्यमूलकत्वात् । एवञ्च "ज्वरत्वर" इत्यादिसूत्रेण यत्रोठ् भवति तत्र यङ्लुग् भवत्येवेति तत्त्वविदः । ( ज्ञापनप्रकारस्तु ४१ वर्षे द्रष्टव्यः )

विद्वच्छब्दादिति—विद्वच्छब्दात् क्यङि लटि 'विद्वायते' 'विद्वस्यते' इति । अत्र परस्मैपदं तु न, क्यङो ङित्वेन आत्मनेपदस्य जागरूकत्वात् ।

३—मेधा आशुग्रहणे—अस्मात् "कण्ड्वादिभ्यो यक्" इत्यनेन यकि 'सनाद्यन्ता' इति धातुत्वाल्लिटि आमि द्वित्वादिकार्ये प्रथमपुरुषबहुवचने 'मेधायाञ्चक्रुः' इति ।

अरर आराकर्मणि—अस्मात् "कण्ड्वादिभ्यो यक्" इत्यनेन यकि 'सनाद्यन्ता' इति धातुत्वाल्लिटि आमि द्विरवादिकार्ये प्रथम पुरुष बहुवचने 'अरराञ्चक्रुः' । इति

**अपोपसृष्टकिरतेर्लुङि तिपि**—"अपाकारीत्" इति भवति। "अपाच्चतुष्पाच्छकुनिष्वालेखने" इति सूत्रे आलेखनम्=खननम्। तेन 'गजोऽपाकारीत्' इत्यत्र हर्षे सत्यपि आलेखनाऽभावात् सुट् न। "किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्" इत्यात्मनेपदविधौ ससुट्कानामेव भाष्ये उदाहरणात् तत्रापि नेति तत्त्वविदः।

**आक्रमते**—आङ्पूर्वकात् उद्गमनार्थक क्रम्धातोः "आङ उद्गमने" इति सूत्रेण आत्मनेपदे 'आक्रमते' इति।

**परिमृष्यति**—परीत्युपसर्गपूर्वात् 'मृष तितिक्षायाम्' इति दैवादिकस्य मृष्धातोः स्वरितेत्त्वात्पदद्वये प्राप्ते "परेर्मृषः" इति सूत्रेण आत्मनेपदं प्रबाध्य परस्मैपदे 'परिमृष्यति' इति।

**विवदन्ते**—चैत्रे विरुद्धं व्यवहरन्तीत्यर्थः। 'वि' इत्युपसर्गात् 'वद्' धातोः "भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः" इति सूत्रेण आत्मनेपदे 'विवदन्ते' इति। 'विमतौ' इत्यस्योदाहरणमेतत्।

**उपक्रमते**—उपोपसर्गात् क्रम्धातोः "प्रोपाभ्यां समर्थाभ्याम्" इत्यनेन आत्मनेपदे 'उपक्रमते' इति।

**संगिरते**—समुपसर्गात् 'गॄ' धातोः "समः प्रतिज्ञाने" इत्यनेन आत्मनेपदे 'संगिरते' इति सिद्धम्।

**४—बुभूषिष्यते**—सनन्तात् भूधातोर्भावे लृटि आत्मनेपदे तप्रत्यये 'बुभूष त' इति स्थिते स्यप्रत्यये कृते "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां चिण्वदिट् च" इति सूत्रेण चिण्वद्भावसन्नियोगसिष्टेन इटि ततः "अचो ञ्णिति" इति प्राप्तां वृद्धिं बाधित्वा परत्वाद् "अतो लोपः" इत्यनेन अलोपे उभयोः सकारयोः षत्वे टेरत्वे 'बुभूषिष्यते' इति। चिण्वद्भावाऽभावपक्षेऽपि वलादिलक्षणे इटि रूपं तुल्यम्।

**दायिषीष्ट**—दा-धातोर्भावे आशिष्लिङि आत्मनेपदे तप्रत्यये "लिङः सीयुट्" इत्यनेन सीयुडागमे "सुट्तिथोः" इत्यनेन सुडागमे 'दासीस्त' इति स्थिते "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां चिण्वदिट् च" इत्यनेन चिण्वद्भावसन्नियोगसिष्टेन इटि "आतो युक् चिण्कृतोः" इत्यनेन युगागमे उभयोः सस्य षत्वे ततः ष्टुत्वे 'दायिषीष्ट' इति। चिण्वद्भावाऽभावपक्षे 'दासीष्ट' इति।

**श्वः शीघ्रं वक्ष्यामः**—अनद्यतनत्वसूचनाय श्वशब्दः। अत्र लुटं प्रबाध्य

"क्षिप्रवचने लृट्" इति सूत्रस्थ 'लृड्' ग्रहणसामर्थ्यात् लृट् भवति। अयम्भावः—'क्षिप्रवचने न" इत्युक्ते 'सामान्यातिदेशे विशेषानतिदेशः' इति न्यायेन भविष्यत्सामान्ये विहितस्य लृट एव निषेधः स्यान्नतु लुटः, तस्य अनद्यतनभविष्यद्विशेषविधानात्। कृते हि लृड्ग्रहणे तु उक्तविषये लृडेव स्यात्, नतु लकारान्तरमिति लाभाल्लुटोऽपिविषये लृडेवेति लभ्यते।

जगाम किम्—'आसन्नकालिके भूतानद्यतनपरोक्षार्थवृत्तिधात्वर्थे प्रष्टव्ये सति लिड्विषये लङ्लिटौ स्तः' इत्यर्थक "प्रश्ने चासन्नकाले" इति सूत्रेण लङि सति 'अगच्छत्' किम् इति। लिटि सति 'जगाम' किम् इति च भवति।

कर्मणेति किम्—अस्योत्तरं ३६ वर्षे द्रष्टव्यम्

५—इह भुञ्जीत भवान्—अत्र 'भुञ्जीत' इत्यत्र "विधिनिमन्त्रणे"ति सूत्रेण निमन्त्रणेऽर्थे लिङ् भवति।

प्रवपणीयम्—"कृत्यचः" इत्यनेन नित्यमेवाऽत्र णत्वं भवति। "हलश्चेजुपधात्" इति सूत्रस्य प्रत्युदाहरणमेतत्। तत्र हि 'इजुपधात्' इत्यस्याऽभावेऽप्यनेन वैकल्पिकणत्वं स्यात्।

पण्या—'पण व्यवहारे' अस्माद्धातोः "अवद्यपण्यवर्या गर्ह्यपणितव्याऽनिरोधेषु" इति सूत्रेण निपातनादत्र यत्प्रत्ययो भवति। यद्यपि 'पण व्यवहारे स्तुतौ च' इति धातोरर्थद्वयमस्ति, तथापि पण्यशब्दस्य प्रयोगबलेन व्यवहर्तव्ये एव रूढत्वादिह व्यवहारार्थक एव गृह्यते। स्तुतौ तु—ण्यति उपधावृद्धौ 'पाण्यम्' इति भवति।

लभ्यम्—लभ्धातोः "पोरदुपधात्" इत्यनेन यत्प्रत्यये कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ सकारस्य अमादेशे पूर्वरूपे 'लभ्यम्' इति। ननु यण्ण्यतोरसारूप्यात् "वाऽसरूपोऽस्त्रियाम्" इति परिभाषया "ऋहलोर्ण्यत्" इत्यनेन कदाचिण्ण्यदपि कुतो नेति चेन्न, "नानुबन्धकृतमसारूप्यम्" इति 'वाऽसरूप' सूत्रे भाष्ये उक्तत्वात्।

पापचकः—अस्योत्तरं ३८ वर्षे द्रष्टव्यम्।

गायनः—'गै शब्दे' अस्मात् 'ण्युट् च' इति सूत्रेण ण्युटि अनुबन्धलोपे अनादेशे "आदेच उपदेशे" इत्यात्वे "आतो युक्" इति युकि विभक्त्यादिकार्ये 'गायनः' इति।

दिवाविभेति—अत्र सूत्रे-दिवा, विभा, निशा, प्रभा, भास्, कार, अन्त,

अनन्त, आदि, बहु, नान्दी, किम्, लिपि, लिबि, बलि, भक्ति, कर्तृ, चित्र, क्षेत्र, संख्या, जङ्घा, बाहु, अहर्, यद्, तद्, धनुस्, अरुस्, एषां द्वन्द्वात् सप्तमी। ततश्च—"दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु" इति सूत्रस्वरूपम्। एषु कृञष्टः स्याद् हेत्वादावपीति सूत्रार्थः। अत्र कर्मणीति सुपीति चानुवृत्तं यथायोगमन्वेति। उदाहरणानि यथा—दिवा (दिवसं) करोतीति=दिवाकरः, विभाकरः, निशाकरः, प्रभाकरः, भास्करः (कस्कादित्वात् सः), कारकरः, अन्तकरः, अनन्तकरः, आदिकरः, बहुकरः। (बहुशब्दस्य वैपुल्यार्थं संख्यापेक्षया पृथग्ग्रहणम्) नान्दीकरः, किङ्करः, लिपिकरः, लिबिकरः, भक्तिकरः, कर्तृकरः, चित्रकरः, क्षेत्रकरः, एककरः, जङ्घाकरः, बाहुकरः, अहस्करः (कस्कादित्वात् सः), यत्करः, तत्करः, धनुष्करः—अरुष्करः (उभयत्र 'नित्यं समासे' ति षत्वम्)।

६—कालिं मन्या-कालीमात्मानं मन्यते इति विग्रहे 'मन ज्ञाने' अस्माद्धातोः 'आत्ममाने खश्च' इति सूत्रेण खश्प्रत्यये शित्वात् सार्वधातुकसंज्ञायां 'दिवादिभ्यः श्यन्' इति श्यनि उपपदसमासे 'खित्यनव्ययस्य' इति सूत्रेण पुंवत्वं प्रबाध्य परत्वाद्ध्रस्वे 'अरुर्द्विषदजन्तस्य' इति मुमि तस्यानुस्वारे कृदन्तत्वात् सौ स्त्रीत्वाट् टापि सोर्लोपे 'कालिं मन्या' इति।

शीतभोजी—शीतं भोक्तुं शीलमस्येति विग्रहे भुज्धातोः 'सुप्यजातौ णिनिस्ताच्छील्ये' इत्यनेन णिनिप्रत्यये उपपदसमासे लघूपधगुणे कृदन्तत्वात् सौ नान्तत्वात् दीर्घे सुलोपे नलोपे 'शीतभोजी' इति।

दूनः—'दु गतौ' अस्मात् कर्मणि क्तप्रत्यये 'दुग्वोर्दीर्घश्च' इत्यनेन निष्ठातस्य नत्वे दीर्घे च कृदन्तत्वात् सौ रुत्वे विसर्गे 'दूनः' इति।

अभिशीनः—अभिपूर्वकात् 'श्यैङ् गतौ' अस्मात् निष्ठायां क्तप्रत्यये "विभाषाऽभ्यवपूर्वस्य" इत्यनेन यकारस्य सम्प्रसारणे पूर्वरूपे "हलः" इत्यनेन दीर्घे 'अभिशीत' इति स्थिते 'श्योऽस्पर्शे' इत्यनेन निष्ठातस्य नत्वे विभक्त्यादिकार्ये 'अभिशीनः' इति।

स्वान्तम्—'स्वन्' धातोः "क्षुब्धस्वान्तध्वान्त" इत्यादिसूत्रेण निपातनात् क्तप्रत्यये "अनुनासिकस्य क्वी" ति सूत्रेण दीर्घे कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे 'स्वान्तम्' इति, मनः इति शेषः। अत्र निपातनादिट् न।

मूर्तः—मुर्च्छाधातोः निष्ठायां क्तप्रत्यये "राल्लोपः" इत्यनेन छस्य लोपे

"आतो लोप इटि च" इत्यनेन आलोपे 'हलि चे'ति दीर्घे विभक्त्यादिकार्ये 'मूर्तः' इति। 'रदाभ्यामि'ति नत्वं न' 'न ध्याख्यापृमूर्च्छिमदाम्' इति निषेधात्।

ग्लानः—ग्लैधातोर्निष्ठायां क्तप्रत्यये 'आदेच उपदेशे' इत्यात्वे 'संयोगादेरातो धातोर्यण्वतः' इत्यनेन निष्ठातस्य नत्वे विभक्त्यादिकार्ये 'ग्लानः' इति।

हस्धातोरिति—हस्धातोः 'नपुंसके भावे क्तः' इत्यनेन भावे क्तप्रत्यये नित्यनपुंसकत्वात् 'हसितम्' इत्येव। कर्मणि क्ते कृते तु हसितः, हसितम्, हसिता' इति। वस्तुतस्तु हस्धातोरकर्मकत्वात् कर्मणि प्रत्ययो नेति तत्त्वविदः।

७—शक्नोति भोक्तुम्-अत्र भुज्धातोः 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्' इति सूत्रेण तुमन्प्रत्यये गुणे कुत्वे विभक्तिकार्ये अव्ययत्वात्सुब्लुकि 'भोक्तुम्' इति।

स्फालः—स्फुल्धातोः 'भावे' इति सूत्रेण घञ्प्रत्यये उपधावृद्धौ 'स्फुरतिस्फुलत्योर्घञि' इत्यनेन आत्वे विभक्त्यादिकार्ये 'स्फालः' इति।

पूनिः—अस्योत्तरं ३८ पृष्ठे द्रष्टव्यम्।

भुक्त्वा व्रजति—अत्र भुज्धातोः 'समानकर्तृकयोः पूर्वकाले' इत्यनेन क्त्वाप्रत्यये कुत्वे विभक्त्यादिकार्ये 'भुक्त्वा' इति।

जरीत्वा—जॄधातोः 'समानकर्तृकयोः पूर्वकाले' इत्यनेन क्त्वाप्रत्यये 'जॄव्रश्च्योः क्त्वि' इत्यनेन इटि गुणे 'वॄतो वा' इत्यनेन विभाषया दीर्घे विभक्तिकार्ये 'जरीत्वा' इति।

---

## णिजन्तादि–उत्तरकृदन्तान्तभागे प्रश्नाः।

### १९४०

१—स्मि, जि, धातुभ्यां णिचि लटि, आभ्यामेव सनि लटि च रूपाणि संसाध्य—'चुस्नावयिषति' इत्यत्र णौ द्वित्वात् प्रागन्तरङ्गत्वात् वृद्ध्यावादेशौ कुतो नेति शङ्का सप्रमाणं समाधेया।

२—चञ्चूर्यते। जेघ्नीयते। जङ्गहि। अतातः। एतान् संसाध्य यकारवकारान्तानां ऊठ्भाविनां यङ्लुक् नास्तीत्यत्र प्रमाणं लिखत।

३—ओजायते। औजिढत्। स्वमनायत। साधयति। एतानि संसाध्य हलिकल्योरदन्तत्वनिपातनस्य प्रयोजनं सोदाहरणं प्रदर्शयत।

४ 'आचारेऽवगल्भक्लीबहोढेभ्यः क्विब्वा वक्तव्यः' इति वार्तिकं सोदाहरणं व्याख्येयम् ।

५—न्यषीषहत् । सुष्यूषति । परिसिषीक्षति । एषां प्रयोगाणां साधुत्वमस्ति न वेति सप्रमाणं लिखत ।

६—सपरलाटयोः आङ्पूर्वाद्धन्तेश्च लुङि प्रथमपुरुषैकवचने रूपाणि प्रसाध्य, रामः सीतामुपायत । गर्धयते । अध्यापयति । विरमति । वासयते । एषु विशेषकार्याणि प्रकटयत ।

७—भाविषीष्ट । भावयामासे । आरिता । उदशिश्रियत । पुरा भुङ्क्ते । अपि धास्यति द्वारम् । यजतां भवान् । एते प्रयोगाः सूत्रोपन्यासपूर्वकं तत्तत्कार्यप्रदर्शनद्वारा संस्करणीयाः । कृत्यक्तखलर्थाः कर्मकर्त्तरि भवन्ति नवेति विविच्योच्यताम् ।

अथवा—

बोभूय्यते । घानिषीष्ट । ओदनः पच्यते । नाहं कलिङ्गाञ्जगाम । कच्चिज्जीवति । ऊर्ध्वं मुहूर्त्ताद् यजतां स्म । एतान् तत्तत्कार्यप्रदर्शकसूत्रोपन्यासपूर्वकं संस्कृत्य "अजां ग्रामं नयति" इत्यत्र कर्मस्थक्रियात्वमुपपाद्य यगात्मनेपदाऽभावावुपपाद्यौ ।

८—प्रेक्षणीयम् । जन्यम् । आज्यम् । द्विषतीतापः । क्षीरपायिण उशीनराः । स्त्रीम्मन्यः । समकनः । प्रमुदितः । दितः । उपेयुषो । त्यागी । अजस्रम् । पवित्रम् । एतेषु रूपैव प्रयोगाः साधनीयाः ।

९—अस्ति भोक्तुम् । उपाध्यायः । कायः । परिघः । भूत्या । निपठतिः । इषदाढ्यङ्करः । प्रश्रित्वा । प्रणम्य । प्रवाय । लम्भंलम्भम् । दण्डेनोपघातम् । गेहानुप्रवेशमास्ते । मुखतो भूत्वा । एतेषु रूपैव प्रयोगाः साधनीयाः ।

१०—"चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" "राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः" इति सूत्रे सोदाहरणे स्पष्टं व्याख्येये ।

## प्रश्नोत्तराणि ।

१—स्मि-धातोर्णिचि लटि 'विस्मापयते' इति । तथाहि—'वि' उपसर्गात् 'स्मि' धातोः 'हेतुमति च' इति णिचि णित्वाद्वृद्धौ 'नित्यं स्मयते' इत्यनेन आत्वे

पुकि 'स्मापि' इति ण्यन्तस्य 'सनाद्यन्ता' इति धातुसंज्ञायां लटि 'भीस्म्योर्हेतुभये' इत्यनेन आत्मनेपदे तप्रत्यये शपि गुणे अयादेशे पूर्वरूपे 'विस्मापयते' इति।

ज्ञी—धातोर्णिचि लटि 'ज्ञापयति' इति। (साधनप्रकारस्तु ४४ वर्षे द्रष्टव्यम्)

सनि कृते 'जिगीषति' इति ( साधनप्रकारस्तु ३६ वर्षे द्रष्टव्यम् )

'चुक्षावयिषति' इत्यत्रेति—"ओः पुयण्ज्यपरे" इति सूत्रस्थप्रवर्गयण्-जकारग्रहणेन 'णिच्यच आदेशो न स्याद् द्वित्वे कर्तव्ये' इति ज्ञापनात् 'चुक्षाव-यिषति' इत्यत्र णौ द्वित्वात् प्रागन्तरङ्गत्वात् वृद्ध्यावादेशौ न भवतः। ज्ञापनप्र-कारस्तु चुरादौ द्रष्टव्यः।

तत्र हि—'ओः पुयण्ज्यपरे' इति सूत्रस्य—पिपावयिषति, बिभावयिषति, यियावयिषति, रिरावयिषति, लिलावयिषति, जिजावयिषति, इत्युदाहरणेषु द्वित्वं प्रत्यनिमित्ते णिचि 'द्विर्वचनेऽचि' इति निषेधाऽप्रवृत्त्या द्वित्वात् प्रागेव परत्वाद्वृ-द्ध्यावादेशयोः कृतयोरभ्यासेष्वकारस्य ह्रस्वे सति 'सन्यतः' इत्येवेत्वसिद्धेः पवर्ग-यण्प्रत्याहारजकारग्रहणं व्यर्थम्। 'ओः पयरपरयोरि'त्येव सूत्रमस्तु। पिपाव-यिषति, यियावयिषति, इत्यत्रोक्तरीत्या 'सन्यतः' इतीत्वसिद्धावपि—पिपविषति, यियविषति, इत्यत्र पूङ्धातोर्युधातोश्च अण्यन्तात् सनि अभ्यासे इत्वार्थं तदावश्य-कत्वात्। वर्गप्रत्याहारजग्रहणन्तु व्यर्थमेव। एवञ्च व्यर्थं सत् "णिच्यच आदेशो न स्याद् द्वित्वे कर्तव्ये" इति ज्ञापयति। ज्ञापिते त्वस्मिन्नर्थे 'बिभावयिषति' इत्यादिषु णिचि लुप्ते सति 'चङि' इति द्वित्वे कार्ये प्रत्ययलक्षणमाश्रित्य णिचि गुणा-वादेशयोः प्रतिषेधे सति उवर्णान्तानां द्वित्वेऽभ्यासेऽकाराभावेन 'सन्यतः' इत्य-स्याऽप्रवृत्त्या वर्गप्रत्याहारजग्रहणं स्वांशे चरितार्थम्। ज्ञापनफलन्तु–चुक्षावयिषति, तुतावयिषति, ऊर्णुनावयिषति, पुस्फारयिषति, इत्यादि।

२—चञ्चूर्यते-गर्हितं चरति इति विग्रहे चर्धातोः 'लुपसदचरजपजभदह-दशगृभ्यो भावगर्हायाम्' इत्यनेन' यङि 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'चरफलोश्च' इत्यनेन नुगागमे 'स च पदान्तवद्वाच्यः' इति वार्ति-केन तस्य पदान्तवद्भावे 'वा पदान्तस्य' इत्यनेन अनुस्वारे परसवर्णे 'उत्परस्यातः' इत्यनेन अभ्यासोत्तरखण्डस्याकारस्योत्वे 'हलि चे'ति दीर्घे 'चञ्चूर्य' इति स्थिते 'सनाद्यन्ता' इति धातुत्वाल्लटि आत्मनेपदे तप्रत्यये एत्वे शपि पररूपे 'चञ्चूर्यते' इति। परसवर्णाऽभावे 'चंचूर्यते' इति।

जेघ्नीयते—पुनः पुनः अतिशयेन वा हिनस्तीत्यर्थे यङि विवक्षिते एव

'हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः' इति वार्तिकेन घ्नीभावे कृते यङि ततः 'सन्यङोः' इत्यनेन द्वित्वे अभ्याससंज्ञायां हलादिशेषे चुत्वे जश्त्वे 'गुणो यङ्लुकोः' इत्यनेन अभ्यासस्य गुणे यङन्तस्य धातुसंज्ञायां लटि आत्मनेपदे तप्रत्यये एत्वे शपि पररूपे 'जेघ्नीयते' इति ।

जङ्घहि— हन्धातोर्यङ्लुकि प्रत्ययलक्षणेन द्वित्वे अभ्याससंज्ञायां हलादिशेषे चुत्वे जश्त्वे 'अभ्यासाच्च' इत्यनेन अभ्यासात्परस्य हन्तेर्हकारस्य कुत्वे 'नुगतोऽनुनासिकान्तस्य' इत्यनेन नुकि तस्यानुस्वारे परसवर्णे धातुसंज्ञायां लुटि मध्यमपुरुषैकवचने सिपि तस्य ह्यादेशे 'अनुदात्तोपदेश' इत्यादिना अनुनासिकनकारस्य लोपे शपि पररूपे 'जङ्घहि' इति । नन्वत्र 'हन्तेर्जः' इति जादेशः कुतो नेति चेन्न, जादेशविधायकसूत्रे हन्तेरित्यत्र श्तिपो निर्दिष्टत्वेन तन्निर्दिष्टकार्यस्य च 'श्तिपा शपे'ति निषेधेन यङ्लुक्यप्रवृत्तिबोधनेन जादेशाऽभावात् ।

अतातः—'यङो वा' ईडभावपक्षे तृधातोर्यङ्लुकि द्वित्वादिकार्ये कृते 'ततृ' इतिस्थिते 'दीर्घोऽकितः' इत्यनेन अभ्यासस्य दीर्घे धातुत्वाल्लङि तिपि अडागमे गुणे हल्ङ्यादिना तलोपे रेफस्य विसर्गे 'अतातः' इति ।

३—ओजायते—ओजस्वीवाचरतीति विग्रहे 'कर्तुः क्यङ् सलोपश्च' इति सूत्रेण ओजश्शब्दात् क्यङि तत्सन्नियोगशिष्टेन सलोपे 'अकृत्सार्वधातुकयोः' इति दीर्घे धातुसंज्ञायां लटि क्यङो ङित्वादात्मनेपदे 'ओजायते' इति । अत्र क्यङ्सन्नियोगशिष्टसलोपस्तु नित्य एव, 'ओजसोऽप्सरसो नित्यमितरेषां विभाषया' इति वार्तिकेन व्यवस्थितत्वात् ।

औज्ञिढत्—अस्योत्तरं ३८ वर्षे द्रष्टव्यम् ।

स्वमनायत— " ३७ " "

साधयति—बाढशब्दात् णौ 'अन्तिकबाढयोर्नेदसाधौ' इत्यनेन बाढशब्दस्य साधादेशे धातुसंज्ञायां लटि तिपि शपि गुणे अयादेशे पूर्वरूपे 'साधयति' इति ।

हलिकल्योरिति—हलिकल्योरदन्तत्वनिपातनेन 'वृद्धौ सत्यां टिलोपः' इत्यस्य सिद्धिर्भवति । तथाहि—'वृद्धेर्लोपो बलीयान्' इति भाष्यवचनात् पूर्वं टिलोपे अग्लोपित्वाद् दीर्घसन्वद्भावयोरभावात 'अजहलत्' 'अचकलत्' इति रूपद्वयसिद्धौ 'हलिकल्योरदन्तत्वनिपातनं व्यर्थमेव, तदेव व्यर्थीभूय ''वृद्धौ सत्यां टिलोपः'' इति वचनं ज्ञापयति । इत्थं च स्वांशे चरितार्थम् । फलञ्च—'अपीपटत्-अपपटत्' इति रूपद्वयसिद्धिः । पूर्वोक्तभाष्यवचनेन पूर्वं टिलोपस्ततो वृद्धिरिति पक्षः सिद्धो

भवति। हलिकल्योरदन्तत्वनिपातनेन च पूर्वं वृद्धिस्ततष्टिलोपः इति पक्षः सिद्धो भवति एवञ्च प्रमाणद्वयेन मतद्वयं सिद्धं भवतीति पूर्वोक्तरूपद्वयस्यापि सिद्धिरिति दिक्।

४—**आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः**—आचारेऽर्थे एभ्यः क्विब्वा स्यादित्यर्थः। वाग्रहणात् क्यङपि। वार्तिके अवगल्भादयः पचाद्यजन्ताः। क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते। नचात्र क्विप्प्रत्ययसन्नियोगेन अच्प्रत्ययस्यानुनासिकत्वादिनिपातनाद्गल्भादिघटकाकारस्य लोपेऽनेकाच्त्वाभावेन 'अवगल्भाञ्चक्रे' इत्यत्र आम् न स्यादिति वाच्यम्, 'साम्प्रतिकाभावे भूतपूर्वगतिराश्रीयते' इति परिभाषया आम्प्रत्ययस्य सिद्धत्वात्। उक्तवचने प्रमाणञ्च—"आचारेऽवगल्भ" इति प्रकृतवार्तिकमेव। नच आचारेऽर्थे—अवगल्भते, क्लीबते, होडते, इत्यादौ आत्मनेपदार्थं वार्तिकं सार्थकमिति वाच्यम्, "धातूनामनेकार्थाः" इति वचनेन प्रत्ययरहितगल्भादिधातोरप्याचारेऽर्थे शक्तिप्रदर्शनाद् 'अवगल्भते' इत्यादौ तङः सिद्धत्वात्। वार्तिके अवोपसर्गविशिष्टपाठसामर्थ्यात् केवलगल्भादिधातोः उपसर्गान्तरविशिष्टाच्च क्यङेव भवतीति माधवादयः। परञ्च क्यङ्क्विपोर्नास्ति विवादो द्वाभ्यामपि भाव्यम्। किन्तु अवोपसर्गरहितगल्भादिभ्यः क्विपि सति परस्मैपदमेव स्यान्नत्वात्मनेपदमित्येव वक्तुं युक्तम्। वार्तिकस्य मुख्यप्रयोजनं प्रयोगे आम्प्रत्ययस्य सिद्धिः। आत्मनेपदं तु गौणफलमिति दिक्।

५—**न्यषीषहत्**—'नि' उपसर्गात् 'षह मर्षणे' अस्माद् धातोर्णिचि लुङि 'न्यसीषहत्' इति सिद्धं रूपं भवति। 'न्यषीषहत्' इति त्वसाध्वेव 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्' इत्यनेन उपसर्गस्थनिमित्तात्परस्य षत्वस्य "स्तन्भुसिवुसहां चङि" इत्यनेन निषेधात्।

**सुस्यूषति**—सिवुधातोः सनि "सनीवन्तर्ध" इत्यादिना इडभावपक्षे 'हलन्ताच्चे'ति कित्वात् 'च्छ्वोः शूडि'ति वकारस्य ऊठि सकारादिकारस्य यणि द्वित्वादिकार्ये 'सुस्यूषति' इति सिद्धं रूपं निष्पन्नम्। यत्तु अभ्यासेणः परस्य सस्य षत्वे 'सुष्यूषति' इत्युक्तं तन्न मनोरमम्, "स्तौतिण्योरेव षण्यभ्यासात्" इत्यनेन—अभ्यासेणः परस्य चेत्सस्य षत्वं तर्हि स्तौतिण्यन्तयोरेवेत्युक्तत्वात्।

**परिषिषिक्षति**—इति षकारद्वयघटितप्रयोग एव साधु। यत्तु 'सुस्यूषति' इति वदिहापि "स्तौतिण्योरेव षण्यभ्यासात्" इत्यनेन निषेधात् षभूते सनि 'इण्

गतौ' इति धातोः परस्य सस्य षत्वं नेत्युक्तं तन्न, 'मध्येऽपवादन्यायेन 'आदेश-प्रत्यययोः' इत्यनेन प्राप्तषत्वस्यैव तेन बाधात्। 'स्थादिष्वभ्यासेन चाभ्यासस्य' इत्यनेन षत्वं तु भवत्येवेति दिक्।

६—सपर पूजायाम्—धातोः 'कण्ड्वादिभ्यो यक्' इत्यनेन यकि अतो लोपे 'सपर्य' इति। तस्मात् 'सनाद्यन्ता' इति धातुत्वाल्लुङि तिपि अडागमे मध्ये च्लौ च्लेः सिचि सस्य इटि 'अस्तिसिचो' पृक्तेः' इत्यनेन तस्य च ईटि 'यस्य हलः' इत्यनेन यलोपे 'अतो लोपः' इत्यनेन अलोपे उपधादीर्घे 'इट ईटि' इत्यनेन सलोपे सवर्णदीर्घे 'असपरीत्' इति।

लाट जीवने—अस्मात् 'कण्ड्वादिभ्यो यक्' इति यकि, अतो लोपे 'सना-द्यन्ता' इति धातुत्वाल्लुङि तिपि अडागमे मध्ये च्लौ सिचि सस्य इटि 'अस्ति-सिचोऽपृक्तेः' इत्यनेन तस्य ईटि 'यस्य हलः' इत्यनेन यलोपे अतो लोपे 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अलाटीत्' इति।

आङ्पूर्वाद् हन्धातोः—लुङि 'आङो यमहनः' इत्यनेन आत्मनेपदे तप्रत्यये 'आत्मनेपदेष्वन्यतरस्याम्' इत्यनेन विभाषया हनो वधादेशे अडागमे मध्ये च्लौ च्लेः सिचि 'आ अ वध स त' इति स्थिते सवर्णदीर्घे सस्य इटि अतो लोपे सकारस्य षत्वे ष्टुत्वे 'आवधिष्ट' इति। वधादेशाभावपक्षे 'आहत' इति। ( अस्य साधनप्रकारस्तु ४१ वर्षे द्रष्टव्यः )।

रामः सीतामुपायत—'उप' उपसर्गात् 'यम्' धातोर्लुङि 'उपाद्यमः स्व-करणे' इत्यनेन आत्मनेपदे तप्रत्यये मध्ये च्लौ च्लेः सिचि अडागमे सवर्णदीर्घे 'विभाषोपयमने' इत्यनेन सिचः कित्वपक्षे 'अनुदात्तोपदेशे'ति मलोपे 'ह्रस्वादङ्गात्' इति सिज्लोपे 'उपायत' इति। किद्वद्भावाऽभावपक्षे 'उपायंस्त' इति।

गर्धयते—अत्र 'गृधिवञ्च्योः प्रलम्भने' इत्यनेन आत्मनेपदमिति विशेषः।

अध्यापयति—अत्र 'बुध-युध-नश-जनेङ्प्रुद्रुस्रुभ्यो णेः' इत्यनेन परस्मै-पदमिति विशेषः।

विरमति—अत्र 'व्याङ्परिभ्यो रमः' इत्यनेन परस्मैपदमिति विशेषः।

वासयते—अत्र 'वस निवासे' अस्माद्धातोः 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इत्यनेन परस्मैपदे प्राप्ते 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः' इत्यनेन निषेधे सति 'णिचश्च' इत्यनेन आत्मनेपदं भवतीति विशेषः।

७—भाविषीष्ट—भूधातोर्णौ वृद्धौ आवादेशे भावीति ण्यन्तात् कर्मणि

आशीर्लिङस्तादेशे सीयुडागमे सुडागमे च विहिते 'स्यसिच्सीयुट्तासिषु भाव-कर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इत्यनेन चिण्वदिटि तस्याभीयत्वेनाऽसिद्धत्वात् णिलोपे द्वयोः सकारयोः षत्वे ष्टुत्वे 'भाविषीष्ट' इति। चिण्वदिडभावपक्षे वलादिलक्षणे इटि तस्य अनाभीयत्वेन असिद्धत्वाऽभावात् अनिटीति निषेधात् णिलोपाऽभावे गुणायादेशयोः कृतयोः 'भावयिषीष्ट' इति।

**भावयामासे**—भूधातोर्णौ वृद्धौ आवादेशे भावीतिण्यन्तात्कर्मणि लिटः आमादेशे लिटो लुकि आमन्तलिटपरकाऽसानुप्रयोगे लिटः स्थाने तादेशे तस्य 'लिटस्तझयोरि'ति ऐसादेशे णेरिकारस्य गुणेऽयादेशे च कृते 'भावयामासे' इति। ननु भावयामास् ए इति स्थिते 'ह एति' इत्यनेन सकारस्य हकारः कुतो नेति चेन्न, सार्वधातुक एव एति परे तेन हकारविधानात्।

अयम्भावः—'ह एति' इति सूत्रे 'तासस्त्योः' इत्यनुवर्तते' ततश्च 'एधिताहे' 'व्यतिहे' इत्युभयोरुदाहरणयोः सार्वधातुक एव एतिपरे हकारविधानदर्शनात् प्रकृते एकारस्यार्धधातुकत्वेन नाऽस्तेः सकारस्य हकार इति दिक्।

**आरिता**—ऋधातोः कर्मणि लुटस्तादेशे तस्य डादेशे च कृते मध्ये तासिप्रत्यये सलोपे सवर्णदीर्घे 'ॠ ता' इति स्थिते परत्वान्नित्यत्वाच्च ऋकारस्य गुणे रपरत्वे च कृते अजन्तत्वाऽभावेऽपि उपदेशग्रहणात् 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इत्यनेन चिण्वदिटि उपधावृद्धौ 'आरिता' इति।

**उदशिश्रियत्**—'उत्' उपसर्गात्ण्यन्तात् श्रिधातोः कर्मकर्तरि लुङि तिपि अडागमे मध्ये च्लौ 'यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम्' इति वार्तिकेन कर्मत्वातप्राप्तचिणो निषेधात 'णिश्रीति' च्लेश्चङि द्वित्वादिकार्ये णिलोपे इयङि तकारस्य जश्त्वे उदशिश्रियत्' इति।

**पुराभुङ्क्ते**—अस्योत्तरं ३७ वर्षे द्रष्टव्यम्।

**अपिधास्यति द्वारम्**—'उताप्योः समर्थयोः' इति सूत्रस्य प्रत्युदाहरणमेतत्। तत्र हि समर्थयोर्ग्रहणाऽभावे अत्राऽपि लिङ् स्यादिति भावः।

**यजतां भवान्**—यजतामित्यत्र 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' इत्यनेन लोडिति विशेषः।

**कृत्यक्तखलर्थाः कर्मकर्तरि भवन्ति न वेति**—अस्योत्तरं प्रागेव दत्तम्।

## अथवा प्रश्नोत्तराणि ।

बोभूय्यते—यङन्तात् 'बोभूय' इति धातोर्भावे लटस्तादेशे 'सार्वधातुके यक्' इति यकि एत्वे अतो लोपे शपि पररूपे 'बोभूय्यते' इति द्वियकारकं रूपं सिद्धम् ।

घानिषीष्ट—अस्योत्तरं प्रागेव दत्तं, सूच्या द्रष्टव्यम् ।

ओदनः पच्यते—अत्र 'कर्मवत्कर्मणा तुल्यक्रियः' इत्यनेन कर्तुः कर्मवद्भावेन पच्धातोः कर्मकार्ये 'सार्वधातुके यक्' इति यक्, भावकर्मणोः, इत्यात्मनेपदम् च भवतः ।

**नाहं कलिङ्गान् जगाम**—कलिङ्गेषु=कलिङ्गो नाम निषिद्धो देशः, तेषु ( जनपदविशेषवाचित्वाद् बहुवचनम् ) अवात्सीः । अतस्त्वया न सहवासयोग्य इति प्रश्ने—नाऽहं 'कलिङ्गान् जगाम' इत्युत्तरम् । अत्र 'जगाम' इत्यत्र 'अत्यन्ताऽपह्नवे लिङ्वक्तव्यः' इति वार्तिकेन अपरोक्षार्थे लिड्भवति । द्वित्वादिकार्यन्तु पूर्ववत् । वार्तिके 'अपह्नवः=अपलापः । प्रस्तुतवाक्ये तद्देशगमनोत्तरकालिकवासविषयकप्रश्ने कारणीभूतगमनस्यैवाऽपलापात् अत्यन्तापह्नवो ज्ञेयः ।

कच्चिज्जीवति—'कामप्रवेदनेऽकच्चिति' इति सूत्रस्य प्रत्युदाहरणमेतत् । तत्रहि अकच्चितीत्यस्याऽभावे अत्राऽपि लिङ्स्यात् । कच्चिच्छब्दस्येच्छार्थकत्वाऽभावात् 'इच्छार्थेष्वप्यत्र लिङ्नेति तत्त्वविदः ।

**ऊर्ध्वं मुहूर्तात् यजतांस्म**—अत्र 'यजताम्' इत्यत्र 'स्मे लोट्' इति सूत्रेण लोट् भवतीति विशेषः । अन्यत्कार्यं तु पूर्ववत् ।

**अजा ग्रामं नयति**—अत्र 'कर्मवत् कर्मणां प्रतिषेधो वक्तव्यः' इति वार्तिकेन नयतेर्द्विकर्मकतया अजारूपकर्मणः कर्तृत्वविवक्षायां कर्मस्थया क्रियया तुल्यक्रियत्वसत्वात् प्राप्तस्य कर्मवद्भावस्य ग्रामरूपकर्मणा सकर्मकत्वान्निषेधे न तत्प्रयुक्तयगादिकं भवतीति ।

वस्तुतस्तु—गमनानुकूलव्यापाररूपेण अजानिष्ठफलेन नेतृव्यापारेण वा तत्र विशेषादर्शनेन कर्मस्थक्रियत्वाऽभावादिदं चिन्त्यम् । यदि ग्रामसंयोग एव तथेत्युच्यते तर्हि ग्रामं गच्छतीत्यादौ ग्रामेऽपि पुरुषसंयोगरूपविशेषदर्शनेन गम्यर्थस्याऽपि कर्मस्थत्वं स्यात् । अत एव अन्योन्यमाश्लिष्यत इत्येवोदाहृतं भाष्ये ।

द—**प्रेङ्खणीयम्**—'इखि गतौ' इदित्वान्नुम्, 'इङ्ख्' इति तस्मात् प्रोपसर्गपूर्वकात् 'इङ्ख्' धातोः 'तव्यत्तव्यानीयरः' इत्यनेनाऽनीयर्प्रत्यये 'इजादेः

सनुमः' इति नियमात् 'हलश्चेजुपधात्' इत्यनेन णत्वे आद्गुणे कृते कृदन्तत्वात्सौ तस्य अमादेशे पूर्वरूपे 'प्रेङ्खणीयम्' इति ।

**जन्यम्**—अस्योत्तरं ३६ वर्षे द्रष्टव्यम् ।

**आज्यम्**—आङ्पूर्वात् ऊकारेत्संज्ञक 'अञ्जू' धातोः 'आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्' इति वार्तिकेन बाहुलकात् करणे क्यपि 'अनिदिताम्' इति नलोपे विभक्त्यादिकार्ये 'आज्यम्' इति जातम् ।

**द्विषतीतापः**—अणन्तोऽयम् । नन्वत्र 'लिङ्गविशिष्टपरिभाषया द्विषतीशब्देऽप्युपपदे 'द्विषत्परयोस्तापे' इत्यनेन खचि 'खचि ह्रस्वः' इत्यनेन ह्रस्वे 'द्विषतीतपः' इति कुतो नेति चेन्न, तस्या अनित्यत्वात् । अनित्यत्वे 'शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यानम्' इत्यत्र घटीग्रहणमेव मानम् । अन्यथा घटग्रहणेनैव लिङ्गविशिष्टपरिभाषया घटीशब्दस्यापि सिद्धे वार्तिके घटीग्रहणं व्यर्थं स्यात् । तदेव व्यर्थीभूय लिङ्गविशिष्टपरिभाषा अनित्येति विज्ञायते ।

**क्षीरपायिणः उशीनराः**—क्षीरं पिबन्तीति विग्रहे क्षीरमुपपदे पाधातोः 'बहुलमाभीक्ष्ण्ये' इत्यनेन णिनिप्रत्यये उपपदसमासे सुब्लुकि 'आतो युक्' इति युकि णत्वे विभक्त्यादिकार्ये 'क्षीरपायिणः' इति ।

**स्त्रीम्मन्यः**—स्त्रियमात्मानं मन्यते इति विग्रहे 'आत्ममाने खश्च' इति सूत्रेण खश्प्रत्यये शित्वात्सार्वधातुकसंज्ञायां श्यनि उपपदसमासे सुब्लुकि 'इच एकाचोऽम्प्रत्ययवच्च' इति सूत्रेण अमि 'वाऽम्शसोः' इत्यनेन इयङि विभक्त्यादिकार्ये 'स्त्रियम्मन्यः' इति । इयङाऽभावे 'अमि पूर्वः' इत्यनेन पूर्वरूपे 'स्त्रीम्मन्यः' इति ।

**समक्नः**—सम्पूर्वादञ्च्धातोः क्तप्रत्यये 'यस्य विभाषा' इत्यनेन इण्निषेधे 'अनिदिताम्' इति नलोपे 'अञ्चोऽनपादाने' इत्यनेन निष्ठातकारस्य नत्वे चकारस्य कुत्वेन ककारे विभक्त्यादिकार्ये 'समक्नः' इति ।

**प्रमुदितः**—प्रोपसर्गात् मुद्धातोः निष्ठायां कर्मणि क्तप्रत्यये इटि 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम्' इति सूत्रेण विभाषया किन्निषेधे गुणाऽभावे विभक्त्यादिकार्ये 'प्रमुदितः' इति । किन्निषेधाऽभावपक्षे गुणे 'प्रमोदितः' इति ।

**दितः**—'दो' धातोः क्तप्रत्यये कृते 'घुमास्थे'ति ईत्वं' 'दो दद्घोः' इति दद्भावं चापवाद्य 'द्यतिस्यतिमास्थामितिकिति' इति सूत्रेण ओकारस्येकारान्तादेशे विभक्त्यादिकार्ये 'दितः' इति ।

**उपेयुषी**—उपोपसर्गादिण्धातोर्लिटि तत्स्थाने क्वसुप्रत्यये द्वित्वादिकार्ये कृते उगित्वान्ङीपि 'वसोः सम्प्रसारणम्' इत्यनेन सम्प्रसारणे पूर्वरूपे उत्तरखण्डस्येकारस्य यणि आद्गुणे विभक्त्यादिकार्ये षत्वे 'उपेयुषी' इति। नन्वत्र 'उपेयिवाननाश्वाननूचानश्च' इति सूत्रेण निपातनात् 'नेड्वशि कृती'ति प्रतिसूतोवलादिलक्षण इट् कुतो नेति चेन्न, तन्निमित्तस्य वकारस्य सम्प्रसारणेन विनाशोन्मुखत्वात्। 'अकृतव्यूहे'ति परिभाषया तन्निषेधात्। 'उपेयिवान्' इति सूत्रेण वलादिलक्षण इडेव प्रतिप्रसूयते नाऽपूर्वो विधीयते इत्यत्र ''उपेयुषः स्वामपि मूर्तिमग्र्याम्'' इति वाक्यमेव मानम्, अन्यथा सम्प्रसारणविषयेऽपि अनेन निपातनादिटि यणादेशे 'उपेय्युषः' इत्यनिष्टापत्तिः स्यात्।

**त्यागी**—त्यज्धातोः ''संपृचानुरुधाङ्यमाङ्यसपरिसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च'' इति सूत्रेण घिनुण्प्रत्यये अनुबन्धलोपे उपधावृद्धौ 'चजोः कु घिण्ण्यतोः' इत्यनेन कुत्वे सति निष्पन्नात् 'त्यागिन्' शब्दात् सौ उपधादीर्घे सुलोपे नलोपे 'त्यागी' इति।

**अजस्रम्**—'जसु मोक्षणे' नञ्पूर्वोऽयं धातुः। निपातनात् नञ् समासे 'नलोपो नञः' इत्यनेन नलोपे 'अजस्' इति। तस्मात् 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इति सूत्रेण रप्रत्यये कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे 'अजस्रम्' इति। सततमित्यर्थः।

**पवित्रम्**—पूयते अनेनेति विग्रहे पूधातोः 'पुवः संज्ञायाम्' इत्यनेन इत्रप्रत्यये गुणेऽवादेशे कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे 'पवित्रम्' इति।

**६—अस्ति भोक्तुम्**—अस्त्युपपदे भुज्धातोः 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्' इति सूत्रेण तुमुन्प्रत्यये लघूपधगुणे कुत्वे कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे 'अस्ति भोक्तुम्' इति। प्रकृतिसूत्रे अर्थग्रहणं सन्निहितत्वात् अस्तिनैव सम्बध्यते। तेन 'भवति, विद्यते वा भोक्तुम्' इत्यपि उदाहरणं भवति।

**उपाध्यायः**—उप=समीपे, एत्य यस्मादधीयते स 'उपाध्यायः' इति। उप-अधि-उपसर्गपूर्वकात् इङ्धातोः 'इङश्च' इति सूत्रेण घञ्प्रत्यये ञित्वाद् वृद्धौ आयादेशे यणि सवर्णदीर्घे 'उपाध्याय' शब्दात् सौ रुत्वे विसर्गे 'उपाध्यायः' इति।

**कायः**—चीयतेऽस्मिन् अस्थ्यादिकमिति कायः। 'चि' धातोः 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः' इत्यनेन घञ्प्रत्यये धातोश्चकारस्य ककारादेशे च कृते ञित्वाद्वृद्धौ आयादेशे 'काय' इति। तस्मात् कृदन्तत्वात् सौ रुत्वे विसर्गे 'कायः' इति ।

**परिघः**—परिहन्यतेऽनेनेति 'परिघः'। परि-उपसर्गात् हन्धातोः 'परौ घः' इति सूत्रेण करणे अप्प्रत्यये सन्नियोगशिष्टेन हनो घादेशे च कृते कृदन्तत्वात् सौ रुत्वे विसर्गे 'परिघः' इति ।

**भृत्या**—भृधातोः 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' इति सूत्रेण क्यप्प्रत्यये 'ह्रस्वस्ये'ति तुकि स्त्रीत्वात् टापि विभक्त्यादिकार्ये 'भृत्या' इति । ( भरणं भृत्या=जीविका )

**निपठितिः**—निपूर्वकात् पठ्धातोः 'स्त्रियां क्तिन्' इत्यनेन क्तिन्प्रत्यये अनुबन्धलोपे 'तितुत्रेष्वग्रहादीनामिति वाच्यम्' इति वार्तिकेन इडागमे विभक्त्यादिकार्ये 'निपठितिः' इति ।

**ईषदाढ्यङ्करः**—अनाढ्यः आढ्य ईषत् क्रियते इत्यर्थः। अत्र 'कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्' इति वार्तिकेन कृधातोः खल्प्रत्यये खित्वान्मुमि गुणे विभक्त्यादिकार्ये 'ईषदाढ्यङ्करः' इति ।

**अश्चित्वा**—अश्च्धातोः क्त्वाप्रत्यये ऊदित्वादिड्विकल्पे प्राप्ते 'जृव्रश्च्योः क्त्वि' इत्यनेन नित्ये इटि कृदन्तत्वात् सौ अव्ययत्वात् सुब्लुकि 'अश्चित्वा' इति । अत्र 'ग्रहिज्ये'ति सम्प्रसारणं तु न, 'न क्त्वा सेट्' इति कित्वनिषेधात् ।

**प्रणम्य**—प्रोपसर्गपूर्वकात् 'नम्' धातोः क्त्वाप्रत्यये 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इत्यनेन ल्यपि 'वा ल्यपि' इत्यनेन विभाषया अनुनासिकलोपे णत्वे 'ह्रस्वस्ये'ति तुकि 'प्रणत्य' इति। अनुनासिकलोपाऽभावे 'प्रणम्य' इति भवति ।

**प्रवाय**—प्रोपसर्गात् 'वेञ् तन्तुसन्ताने' अस्मात् क्त्वाप्रत्यये तस्य ल्यपि 'आदेच उपदेशे' इत्यात्वे अव्ययत्वात् सुब्लुकि 'प्रवाय' इति। 'ग्रहिज्ये'ति संप्रसारणं तु न, 'ल्यपि च' इत्यनेन निषेधात् ।

**लम्भंलम्भम्**—'लभ्' धातोः 'आभीक्ष्ण्ये णमुल् च' इति णमुल्प्रत्यये 'नित्यवीप्सयोः' इत्यनेन द्वित्वे पूर्वरूपे 'विभाषया चिण्णमुलोरि'ति विभाषया नुमि नुमो नकारस्य अनुस्वारे परसवर्णे 'लम्भंलम्भम्' इति । अनुनासिकाऽभावे 'चिण्णमुलोरि'ति दीर्घे 'लाभंलाभम्' इति ।

**दण्डेनोपघातम्**—अस्योत्तरं ३६ वर्षे द्रष्टव्यम् ।

**गेहानुप्रवेशमास्ते**—सर्वाणि गेहान्यनुप्रविश्येति, पुनः पुनः गेहमनुप्रविश्येति वा विग्रहे 'विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः' इति सूत्रेण विश्धातोः णमुलि लघूपधगुणे अव्ययत्वात् सुब्लुकि 'गेहानुप्रवेशम्' इति । आस्ते इति शेषः ।

**मुखतो भूत्वा**—तसुप्रत्ययान्ते स्वाङ्गे उपपदे भूधातोः 'स्वाङ्गे तस्प्रत्यये कृभ्वोः' इत्यनेन क्त्वाप्रत्यये अव्ययत्वात् सुब्लुकि 'मुखतो भूत्वा' इति ।

**१०—चिण्णमुलोरिति**—अस्योत्तरं सूच्या प्राग् द्रष्टव्यम् ।

**राजसूयेति**—अनेन सूत्रेण राजसूय, सूर्य, मृषोद्य, रुच्य, कुप्य, कृष्टपच्य, अव्यथ्य, एते सप्त निपात्यन्ते । तत्र प्रथमनिपातने–राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः, यद्वा लतात्मकः सोमो राजा, स सूयते=कण्ड्यतेऽत्रेति विग्रहे 'षुञ् आभिषवे' अस्मात् 'धात्वादेः षः सः' इति सत्वे 'सुञ्' इति । तस्मात् निपातनात् अधिकरणे क्यपि दीर्घे च कृते विभक्त्यादिकार्ये 'राजसूयः, राजसूयम्' इति । ( अर्धर्चादिः ) ।

द्वितीयनिपातने–'सूर्यः' इति । अत्र सरत्याकाशे इति विग्रहे सृधातोः निपातनात् कर्तरि क्यपि उत्वे तस्य रपरत्वे 'हलि चे'ति दीर्घे विभक्त्यादिकार्ये 'सूर्यः' इति । केचित्तु 'षू प्रेरणे' अस्मात् निपातनात् क्यपि रुटि 'सूर्यः' इत्याहुः ।

तृतीयनिपातने—'मृषोद्यम्' इति । अत्र मृषोपपदाद्वदेः निपातनात् कर्मणि नित्यं क्यपि 'वचिस्वपी'ति सम्प्रसारणे पूर्वरूपे गुणे विभक्त्यादिकार्ये 'मृषोद्यम्' इति ( विशेष्यनिघ्नोऽयम् ) ।

चतुर्थनिपातने—'रुच्यः' इति । अत्र रुच्धातोः निपातनात् कर्तरि क्यपि विभक्त्यादिकार्ये 'रुच्यः' इति ।

पञ्चमनिपातने—'कुप्यम्' इति । अत्र 'गुप्' धातोः निपातनात् क्यपि धातोरादिवर्णस्य कत्वे च कृते विभक्त्यादिकार्ये 'कुप्यम्' इति । ( सुवर्णरजतभिन्नं धनं कुप्यम् ) ।

षष्ठनिपातने—'कृष्टपच्याः' इति । अत्र कृष्टोपपदात् पचधातोः कर्मकर्त्तरि निपातनात् क्यपि विभक्त्यादिकार्ये 'कृष्टपच्याः' इति । कृष्टप्रदेशे ये स्वयं पच्यन्ते ते 'कृष्टपच्याः' इति । ( बहुवचनान्तनिर्देशोऽयम् ) ।

सप्तमनिपातने—'अव्यथ्यः' इति । न व्यथते इति विग्रहे व्यथ्धातोः निपातनात् कर्तरि क्यपि नञ्समासे विभक्त्यादिकार्ये 'अव्यथ्यः' इति ।

---

# णिजन्तादि-उत्तरकृदन्तान्तभागे प्रश्नाः।

१९४१

१—जिघृक्षति। ईर्त्सति। अरिरिषति। जेगिल्यते। अजर्घाः एते साधु साध्याः।

२—सपत्नायते। स्वमनायत। अजहलत्। ओजढत्-विग्रहप्रदर्शनपूर्वकमेतान् संसाध्य स्वमनायतेत्यत्र सुशब्दात्प्रागट् कुतो नेति विवेचनीयम्।

३—यकार-वकारान्तानामूठ्भाविनां यङ्लुङ् नास्तीत्यत्र प्रमाणमुपन्यस्यताम्।

४—विद्यामादत्ते। आहत। मा समृत। उत्कुरुते। गडुं विनयति। पदं सुष्ठु कारयति। वारयियिषति। एतान् संसाध्य 'कण्ड्वादिभ्यो यक्' इति सूत्रे धातोरित्यनुवृत्तेः प्रयोजनं लिखत।

अथवा

व्यतिलुनीते। अनुक्रीडते। शतं प्रकुरुते। अनुवदति वीणा। मातुः सञ्जानाति। उपरमति। परिमोहयते। एतान् संसाध्य 'अनुपराभ्यां कृञः' इति सूत्रस्य प्रयोजनं ब्रूत।

५—अन्वतप्त पापेन। अगारिध्वम्। शामिता। कारिष्यते घटः। कुष्यते पादः स्वयमेव। नाहं कलिङ्गान् जगाम। मुहूर्तादुपरि उपाध्यायश्चेदागच्छेत्। वसन्तीह पुरा छात्राः। अधीष्व अधीष्व इत्यधीते। एषां साधुत्वं ब्रूत।

६—निर्विण्णः। अजर्यम्। पञ्च प्रयाजाः। सान्नाय्यम्। वाह्यम्। पादहारकः। शोकापनोदः। कुक्षिम्भरिः। आढ्यङ्करणम्। मन्त्रकृत्। वित्तः। क्लिष्टम्। धृष्टः। तूर्णः। अर्जयन्। वसति। विकत्थी। नेत्रम्। एषु अष्टौ प्रयोगाः साधनीयाः।

७—कृष्णं द्रष्टुं याति। रङ्गः। निस्वानः। अटाट्या। उदकोदञ्चनः। अपमाय। परिव्याय। चौरङ्कारमाक्रोशति। एते प्रयोगाः कार्यविशेषप्रदर्शनपुरस्सरं साधनीयाः।

अथवा

विसारः। निष्पावः। दरः। उप्त्रिमम्। सर्वं कारिम्। अप्राप्य

नर्दी पर्वतः। प्रापय्य। गोस्पदप्रम्। एतेषां साधुत्वं प्रदर्शयत।
८—"णेरणौ यत्कर्मणौ चेत्स कर्ताऽनाध्याने", "विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयो"रिति सूत्रद्वयं सोदाहरणं व्याख्यायताम्।

## प्रश्नोत्तराणि।

१—जिघृक्षति—'ग्रह्' धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सनि अनुबन्धलोपे सनः आर्धधातुकत्वात् इटि प्राप्ते "सनि ग्रहगुहोश्च" इति निषेधे धातुसंज्ञायां लटि तिपि अनुबन्धलोपे "रुदविदमुषग्रहिस्वपिप्रच्छः संश्च" इति सनः कित्वेन "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति सम्प्रसारणे पूर्वरूपे "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायाम् "उरत्" इति अत्त्वे हलादिशेषे च "कुहोश्चुः" इति चुत्वे "सन्यतः" इति इत्वे सति इकारादिणः परस्य सस्य षत्वं प्राप्ते तस्यासिद्धत्वात् हस्य ढत्वे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति भष्भावे "षढोः कः सि" इति ककारे षत्वे 'जिघृक्षति' इति सिद्धम्।

ईर्त्सति—अर्द्धितुमिच्छति इति विग्रहे 'ऋध्' धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सनि अनुबन्धलोपे "आप्ज्ञप्यृधामीत्" इति ईत्वे रपरत्वे ईर्ध्+स इति स्थिते "पूर्वत्रा"सिद्धीयमद्वित्वे" इति वचनात् पूर्वं चर्त्वे ततः "नन्द्राः" इति रेफं वर्जयित्वा "अजादेर्द्वितीयस्ये"ति 'त्स' इत्यस्य द्वित्वे अभ्याससंज्ञायाम् "अत्र लोपोऽभ्यासस्य" इति अभ्यासस्य लोपे "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि शपावितौ "अतो गुणे" इति पररूपे 'ईर्त्सति' इति। इवन्त-ऋध-भ्रस्ज-दम्भु-श्रि-स्व-यु-ऊर्णु-भर-ज्ञपि-सन्भ्यः सन इड् वा स्यादित्यर्थक "सनीवन्तर्धे"ति इट् पक्षे तु—'अर्दिधिषति' इति बोध्यम्।

अरिरिषति—'ऋ' धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सनि अनुबन्धलोपे आर्धधातुकसंज्ञायां "स्मिपूङ्रञ्ज्वशां सनि" इति इडागमे गुणे रपरे अरि+स् इति स्थिते "अजादेर्द्वितीयस्य" इति रिस् शब्दस्य "सन्यङोः" इत्यनेन द्वित्वे अभ्याससंज्ञायां "हलादिः शेषः" इति सलोपे "सनाद्यन्ताः" इति धातुसंज्ञायां लटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि पररूपे षत्वे 'अरिरिषति' इति।

नच "द्विर्वचनेची"ति निषेधात् इडागमोत्तरं कथं गुण इति वाच्यम्, इगो द्वित्वकार्यित्वेन "कार्यमनुभवन्नि"ति परिभाषया निमित्तत्वाभावेन "द्विर्वचनेची"-त्यस्याऽप्राप्तेः।

**जेगिल्यते**—'गॄ' धातोर्यङि धातुसंज्ञायां "ऋत इद्धातोः" इति इत्वे लटि तप्रत्यये एत्वे 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायाम् "उरत्" इत्यत्वे हलादि-शेषे "गुणो यङ्लुकोः" इत्यभ्यासेकारस्य गुणे "ग्रो यङि" इति लत्वे शपि पररूपे 'जेगिल्यते' इति सिद्धम्। गर्हितं गिलतीत्यर्थः।

**अजर्घाः**—'गृधु' अभिकाङ्क्षायामित्यस्माद्धातोः यङ्लुकि 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे "रुग्रिकौ च लुकि" इति सूत्रेण अभ्यासस्य रुकि "कुहोश्चुः" इति चुत्वे जश्त्वे प्रत्ययलक्षणेन यङन्तस्य धातुसंज्ञायां लङि सिपि अनुबन्धलोपे शपि लुकि 'पुगन्ते'ति गुणे रपरत्वे हल्ङ्यादिना सुलोपे जर्+गर्+ध् इति स्थिते "एकाचो बश" इति गकारस्य भष्भावात् घकारे जर्+घर्+ध् इति स्थिते धकारस्य श्चुत्वेन दकारे 'दश्च' इति रुत्वे "लुङ्लङि"ति अडागमे अजर्+घर्+र् इति स्थिते "रो रि" इति रेफलोपे "ढ्लोपे पूर्वस्य दीर्घोऽणः" इति दीर्घे रेफस्य विसर्गे 'अजर्घाः इति सिद्धम्। तदुक्तं केनचित्—

"गृधेर्यलोपे लङि सेरिलोपे हल्ङ्यादिलोपे रपरे गुणे च।
भष्भावजश्त्वे च रुरेफलोपे ढ्लोपदीर्घे च भवेदजर्घाः॥"

२—**सपत्नायते**—सपत्नीवाचरतीति विग्रहे—सपत्नायते, सपतीयते, सपत्नीयते, इति त्रीणि रूपाणि भवन्ति। तथा हि—

शत्रुपर्यायात् सपत्नशब्दात् "शार्ङ्गरवाद्यञो ङीन्" इति ङीनि ततः सौ तद-न्तात्सपत्नीवाचरतीति विग्रहे "कर्तुः क्यङ् सलोपश्च" इति क्यङि कङयोरित्सं-ज्ञायां लोपे च "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि "क्यङ्मानिनोश्च" इति पुंस्त्वेन ङीनो निवृत्तौ "अकृत्सार्वधातुकयोः" इति दीर्घे 'सपत्नाय' इत्यस्य "सनाद्यन्ताधातवः" इति धातुसंज्ञायां लटि तप्रत्यये शपि शपयोरित्संज्ञायां लोपे च 'सपत्नाय अ त' इति स्थिते "अतोगुणे" इति पररूपे "टित आत्मनेपदानां टेरे" इति एत्वे "सपत्नायते' इति।

समानः पतिः=स्वामी यस्याः इति बहुव्रीहौ तु—सपतिशब्दात् "नित्यं सपत्न्यादिषु" इति नादेशे नान्तत्वात् ङीपि च कृते उक्तप्रकारेण क्यङि भाषित-पुंस्कत्वात् पुंवद्भावेन ङीन्नत्वयोर्निवृत्तौ दीर्घादिकार्ये 'सपतीयते' इति।

विवाहजन्यसंस्कारविशेषनिमित्तकं पतिशब्दमाश्रित्य समानः पतिः = भर्ता यस्याः इति बहुव्रीहौ उक्तरूपेण निष्पन्नस्य सपत्नीशब्दस्य नित्यस्त्रीत्वात् पुंस्त्वाभावेन क्यङादिकार्ये 'सपत्नीयते' इति ।

**स्वमनायत**—अस्योत्तरं ३७ वर्षे द्रष्टव्यम् ।

**अजहलत्**— हलिं गृह्णाति 'हलयति' तस्य लुङि 'अजहलत्' इति । तथाहि- 'हल्यादिभ्यो ग्रहणे'' इति वार्तिकेन हलिकल्योरदन्तत्वनिपातनात् हल धातोः ''मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्'' इति णिचि इष्टवद्भावेन टिलोपे धातुसञ्ज्ञायां लुङि तिपि मध्ये च्लौ 'णिश्रिद्रुस्रुभ्यः' इति चङि द्वित्वे अभ्यासादिकार्ये ''णेरनिटि'' इति णिलोपे 'अजहलत्' इति ।

**औजढत्**—वहधातोः क्तप्रत्यये ढत्व-धत्व-ष्टुत्व-ढलोपादिषु कृतेषु 'ऊढ, इति, तमाख्यदित्यर्थे ''तत्करोति तदाचष्टे'' इति णिचि इष्टवद्भावेन टिलोपे प्राप्ते 'णिचि अच आदेशो न द्वित्वे कर्तव्ये'' इति निषेधात् धातुसञ्ज्ञायां लुङि तिपि अनुबन्धलोपे मध्ये च्लौ चङि अनुबन्धलोपे ढत्वादीनामसिद्धत्वात् 'हत' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे अभ्यासस्य चुत्वे आदिवृद्धौ 'औजढत्' इति । 'पूर्वत्रासिद्धीयमद्वित्वे' इति ढत्वादीनामसिद्धत्वाभावपक्षे ढशब्दस्य द्वित्वे तु 'औड-ढत्' इति बोध्यम् ।

**सुशब्दात्प्रागट् कुतो नेति**—अस्योत्तरं 'स्वमनायत' इत्यस्य साधुत्वावसरे ३७ वर्षे द्रष्टव्यम् ।

**३—यकारवकारान्तानामिति**—अयम्भावः ''च्छ्वोः शूड्'' इति सूत्रे भाष्ये किद्ग्रहणमनुवर्तते न वेति विचारे कांश्चिद्दोषानुद्भाव्य परिहृत्य चोक्तम्—एतावानेव विशेषः, अनुवर्तमाने किद्ग्रहणे छः षत्वं वक्तव्यम्, अननुवर्तमाने तु अनेन शत्वे कृते शान्तत्वादेव षो भविष्यतीति प्रष्टा प्रष्टुमित्यादिसिद्धये व्रश्चादि-सूत्रे छग्रहणं न कर्तव्यम् ।'एवं हि वदता भाष्यकृता ऊठ्भाविभ्यो यङ्लुक् नास्तीत्युक्तप्रायम् । अन्यथा दिवेर्यङ्लुकि ईडभावपक्षे देदेति, देदेषि इत्यादौ ऊठो भावाभावाभ्यां महान् विशेषः स्यात् । तत्र किद्ग्रहणाननुवृत्तावूठः प्रवृत्त्या देद्योति देद्योषीत्यादिरूपविशेषलाभात्, परन्त्विदं ज्ञापकं ''च्छ्वोः शूड्'' इत्यनेन यत्रोठ् प्रवर्तते तत्रैव प्रवर्तते, तज्ज्ञापनस्योक्तसूत्रस्य भाष्यमूलकत्वात् । ''ज्वरत्वर'' इत्यादि सूत्रेण यत्रोठ् भवति, तत्र यङ्लुक् भवत्येवेति युक्तं माधवादीनां मतञ्च ।

**४—चिद्यामादत्ते**—आङ्पूर्वकात् 'दा'धातोर्लटि ''आङो दोऽनास्यविहरणे''

द्वित्वे अभ्याससंज्ञायाम् "अभ्यासे चर्च" इत्यनेन जश्त्वे "गुणो यङ्लुकोः" इत्यनेन अभ्यासोकारस्य गुणे 'बोभूय' इत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि ङिदन्तत्वादात्मनेपदे तप्रत्यये एत्वे शपि पररूपे "बोभूयते" इति । "क्रियासमभिहारे द्वे" इत्यनेन पुनर्द्वित्वन्तु न, तस्य लोड्विषयत्वादिति तत्र सूत्रे भाष्ये स्पष्टम् ।

२—बोभवीति—'भू' धातोर्यङि "यङोऽचि च" इत्यनेन तस्य लुकि प्रत्ययलक्षणेन "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायाम् "अभ्यासे चर्च" इत्यनेन जश्त्वे "गुणो यङ्लुकोः" इत्यनेन अभ्यासोकारस्य गुणे 'बोभू' इत्यस्माल्लटि तिपि इत्संज्ञायाम् 'बोभू ति' इति स्थिते "श्तिपाशपे" ति निषेधात् "दिवादिभ्यः श्यन्", 'रुधादिभ्यः श्नम्" इत्यादीनाप्राप्तावपि "कर्त्तरि शप्" इत्यस्य "श्तिपाशपे" ति निषेधाविषयत्वात् तेन शपि "चर्करीतञ्चे"त्यदादौ पाठात् शपो लुकि "यङो वा" इत्यनेन ईडागमे । ऊकारस्य गुणे अवादेशे "बोभवीति । "भूसुवोस्तिङि" इति गुणनिषेधस्तु यङ्लुकि भाषायां न "बोभूतु ते तिक्ते" इति छन्दसि निपातनात् । अत एव यङ्लुग्भाषायामपि सिद्धः ।

वर्वृतीति—'वृतु वर्तने' अस्मात् यङि यङ्लुकि च कृते "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरत्वे हलादिशेषे च कृषे 'वर्वृत' इत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि तिपि अनुबन्धलोपे "यङो वा" इत्यनेन ईटि व वृत ई ति इति स्थिते "नाभ्यस्तस्याचि पिति सार्वधातुके" इत्यनेन निषेधात् लघुपधगुणाऽभावे "रुग्रिकौ च लुकि" इत्यनेन अभ्यासस्य रुकागमे 'वर्वृतीति' इति सिद्धम् । एवञ्च रिकागमे-"वरिवृतीति" रीकागमे-"वरीवृतीति" इत्यपि बोध्यम् ।

अशनायति—अश्यते यत्तदशनम्=अन्नं, तद्भोक्तुमिच्छतीत्यर्थे "अशनायो-दन्य-धनाया-बुभुक्षा-पिपासा-गर्द्धेषु" इत्यनेन 'अशन' शब्दात् क्यचि "क्यचि चे"ति ईत्वाऽभावे च निपातने सति "अकृत्सार्वधातुकयोर्दीर्घः" इत्यनेन दीर्घे "अशनायति" इति सिद्धम ।

अप्सरायते—अप्सरस्शब्दाद् "ओजसोऽप्सरसो नित्यमितरेषां विभाषया" इति वार्तिकवशात् "कर्त्तुः क्यङ्सलोपश्च" इत्यनेन क्यङि सलोपे च कृते "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि आत्मनेपदे तप्रत्यये शपि पररूपे एत्वे दीर्घे "अप्सरायते" इति ।

लोहितायति—'लोहित' शब्दात् भवत्यर्थे "लोहितादिडाज्भ्यः क्यष्" इति सूत्रेण क्यषि अनुबन्धलोपे, नच 'काम्यच्' इव क्यषोऽपि ककारः उच्चारण-सामर्थ्यात् श्रूयत एवेति वाच्यम् ? क्यषः ककारस्य भाष्ये प्रत्याख्यानात्। एवं च लोहितय' इति स्थिते "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि "वा क्यषः" इत्यनेन परस्मैपदसंज्ञायां तिपि इपावितौ सार्वधातुकसंज्ञायां शपि पररूपे दीर्घे च कृते "लोहितायति" इति। आत्मनेपदे तु—"लोहितायते" इति भवति। अलोहितो लोहितो भवतीत्यर्थः।

नच अभूत-तद्भावविषयत्वं कथं लब्धमिति चेच्छृणु-प्रकृतिसूत्रे "अच्चेः" इत्यनुवर्तनात् लभ्यते। नन्वेवमभूततद्भावविषयत्वं डाचोऽपि विशेषणं स्यादिति चेन्न, अव्यक्तानुकरणाड्डाचो विहितत्वेन तस्य अभूततद्भावविषयत्वे अनुकरणत्वस्य भङ्गापत्तेः। एवञ्च आदिशब्दग्राह्याणां श्यामादिशब्दानामपि न विशेषणम् आदिशब्दस्य भाष्ये प्रत्याख्यानात्। तथा च वार्त्तिकम्-"लोहितडाज्भ्यः क्यष्-वचनं, भृशादिष्वितराणि" आदिग्रहणमपनीय लोहितशब्दाड्डाजन्तेभ्यश्च क्यष्वचनं कर्तव्यम्, इतराणि=लोहितादिगणपठितानि, प्रातिपदिकानि भृशादिष्वेव पठनीयानीत्यर्थः। एवञ्च लोहितादिगणपठित-श्यामादिशब्देभ्यः क्यङि नित्यमात्मनेपदमेवेति ज्ञेयमिति दिक्।

ईप्सति—आप्तुमिच्छतीति विग्रहे 'आप्' धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सनि अनुबन्धलोपे "आप्ज्ञप्यृधामीत्" इत्यनेन ईत्वे सन्नन्तस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि तिपि अनुबन्धलोपे "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायाम् "अत्र लोपोऽभ्यासस्य" इत्यभ्यासस्य लोपे सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे पररूपे च "ईप्सति" इति सिद्धम्।

प्राणिणत्—'प्र' इत्युपसर्गात् प्राणनार्थक-'अन्' धातोर्णिचि "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लुङि तिपि इपावितौ "आडजादीनाम्" इत्याटि "आटश्च" इति वृद्धौ 'प्र आ नि त्' इति स्थिते मध्ये च्लौ "णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ्" इत्यनेन चङि णत्वस्याऽसिद्धत्वात् "चङि" इत्यनेन अजादेर्द्वितीयस्येति द्वितीयैकाचस्य 'नि' शब्दस्य द्वित्वे "णेरनिटि" इत्यनेन आर्धधातुके चङि परे णिलोपे सवर्णदीर्घे उत्तरखण्डे नकारस्याऽभ्यासनकारेण व्यवधानात् णत्वेऽप्राप्ते "उभौ साभ्यासस्य" इत्यनेन द्वयोर्नकारयोर्णत्वे "प्राणिणत्" इति सिद्धम्।

न च "पूर्वत्राऽसिद्धीयमद्विर्वचने" इति निषेधात् द्वित्वे कर्तव्ये णत्वस्याऽसिद्धत्वविरहेण परत्वात् कृते णत्वे पश्चात् 'णि' शब्दस्य द्वित्वं कुतो नेति वाच्यम्, एतत् सूत्राऽऽरम्भसामर्थ्यात् तस्याऽनित्यत्वविज्ञानात्। अत एव "अणुनाव" इत्यत्र णत्वात् पूर्वमेव 'नु' शब्दस्य द्वित्वे कृते अभ्यासोत्तरखण्डे णत्वाऽभावसिद्धिरिति दिक्।

दूद्यूषति—दिव्धातोः सन्प्रत्यये ऽनुबन्धलोपे "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इत्यनेन विकल्पेनेड्विधानात् तदभावे "हलन्ताच्च" इति सनः कित्वे "च्छ्वोः शूडनुनासिके च" इत्यनेन वकारस्य ऊठि इकारस्य यणि च कृते "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिशेषे प्रत्ययावयवस्य सनः सकारस्य षत्वे "अज्झनगमां सनि" इति दीर्घे धातुसंज्ञायां लटि तिपि शपि पररूपे 'दूद्यूषति' इति सिद्ध्यति। इट्पक्षे तु हलन्तादित्वाभावात् सनः कित्वाभावे ऊठोऽप्रवृत्तौ लघूपधगुणे "दिदेविषति" इति।

जञ्जप्यते—गर्हितं जपतीति विग्रहे 'जप्' धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि "सनाद्यन्ता०" इति धातुत्वात् लटि, ङिदन्तत्वात् आत्मनेपदे तप्रत्यये "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे "जप-जभ-दह-दश-भञ्ज-पशां च" इत्यनेनाऽभ्यासस्य नुकि अनुस्वारे परसवर्णे शपि पररूपे "जञ्जप्यते" इति।

आरति—अस्योत्तरं ३८ वर्षे द्रष्टव्यम्।

मुण्डयति माणवकम्—माणवकं मुण्डं करोतीत्यर्थे 'मुण्ड' शब्दात् "मुण्ड-मिश्र-श्लक्ष्ण-लवण-व्रत-वस्त्र-हल-कल-कृततूस्तेभ्यो णिच्" इत्यनेन णिचि अनुबन्धलोपे "सनाद्यन्ता०" इति णिजन्तस्य धातुसंज्ञायां लटि तिपि शपि पररूपे "मुण्डयति" इति।

नचाऽत्र "प्रातिपदिकाद्धात्वर्थे" इत्येव सिद्धे प्रकृतिसूत्रे मुण्डादीनां ग्रहणं किमर्थमिति वाच्यम्? सामर्थ्यात् सापेक्षेभ्योऽपि मुण्डादिभ्यो णिजर्थं तस्याऽवश्यकत्वात्। अत एव माणवकं मुण्डं करोतीत्यर्थे मुण्डशब्दस्य सापेक्षत्वेऽपि णिच् सिद्ध्यति। अन्यथा यदा प्रकरणादिना माणवकादिविशेषो ज्ञायते तदैव मुण्डयतीति णिच् स्यान्न तु माणवकादिप्रयोगे। णिजन्तस्य सनाद्यन्तवृत्तित्वात्, सविशेषणानां वृत्त्यभावाच्चेति भावः।

४—अपरिष्कृतस्य—अस्योत्तरम् ४२ वर्षे द्रष्टव्यम्।
आहृतः— ,, ४१ वर्षे ,,

व्याख्या—समुपसर्गात् श्लुविकरणक 'ऋ' धातोर्लुङि प्रथमपुरुषैकवचने माङ्योगे आडागमाऽभावेन "मा समरत्" इत्युदाहरणप्रदर्शनानन्तरमिदं प्रस्तुतमुदाहरणं प्रदर्शितम्। तथाहि—

समुपसर्गात्—श्लुविकरणक 'ऋ' धातोर्लुङि "**समो गम्यृच्छिभ्याम्**" इति सूत्रस्थ—"**अर्ति-श्रु-दृ-शिभ्यश्चेति वक्तव्यम्**" इति वार्तिकेन आत्मनेपदे तप्रत्यये मध्ये च्लौ तस्य "**सर्ति-शास्त्यर्तिभ्यश्च**" इति सूत्रेण अङि "**आडजादीनाम्**" इत्यादि "**आटश्च**" इति वृद्धिं बाधित्वा पूर्वं "**ऋदृशोऽङि गुणः**" इत्यनेन गुणे रपरत्वे पश्चात् वृद्धौ "**समारत**" इति।

भौवादिकस्थस्य 'ऋ' धातोस्तु—"**समार्त**" इति भवति। तथा हि—समुपसर्गात् 'ऋ' इत्यस्माद्धातोर्लुङि "**अर्ति-श्रु-दृ**" इति वार्तिकेन आत्मनेपदे तप्रत्यये अजादित्वादाडागमे मध्ये च्लौ तस्य सिजादेशे 'सम् आ ऋ स् त इति स्थिते "**उश्च**" इति कित्त्वात् गुणाभावे "**ह्रस्वादङ्गात्**" इत्यनेन सिचो लुकि "**आटश्च**" इति वृद्धौ रपरत्वे "**समार्त**" इति।

नचात्राऽपि "**सर्तिशास्त्यर्ती**"ति च्लेरङ् कुतो नेति वाच्यम्? अत्र सूत्रे लुप्तविकरणेन सासिना साहचर्यात् "सर्त्यर्तीति जौहोत्यादिकमेव गृह्यते" इति पूर्वमेव कौमुद्यामुक्तत्वात्। केचित्वत्र "**समार्ष्ट**" इति वदन्ति। तद्व्याख्यानन्तु प्रकृतप्रश्नाशयाऽनुपयुक्तत्वादश्रद्धेयमिति दिक्।

**विनयति विपादिकाम्**—'णीञ् प्रापणे' अस्मात् "**स्वरितञितः**" इत्येव आत्मनेपदे सिद्धे "**कर्तृस्थे चाऽशरीरे कर्मणि**" इति सूत्रं नियमयति—"कर्मकारके कर्तृस्थे सति णीञ्धातोर्यदात्मनेपदं कर्तृगे फले ञित्त्वात्प्राप्तं, तच्छरीरावयवभिन्ने एव सति कर्तृकारके स्यात्" इति। नच सूत्रस्थशरीरग्रहणात् शरीरावयव इति कथमुच्यते इति चेत् सत्यम्? शरीरतादात्म्यापन्नस्यैव कर्तृतया शरीरस्य कर्तृस्थत्वासम्भवेन सूत्रे शरीरशब्दात् शरीरावयवी लक्ष्यते। तेन प्रकृते विपादिकायाः शरीरावयवत्वात् आत्मनेपदाभावेन 'वि' उपसर्गात् 'णी' धातोर्लटि तिपि "**णो नः**" इति नत्वे शपि गुणे अयादेशे "**विनयति**" इति सिद्धं भवतीति। "**पादस्फोटो विपादिका**" इत्यमरः।

**दर्शयते भवः इति**—"**णेरणौ यत्कर्म णौ चेत् स कर्ताऽनाध्याने**"

इत्यस्योदाहरणमिदम् । तस्य सङ्गमत्थित्थम्—

पश्यति भवः इति द्वितीयकक्षायां या क्रियोच्यते सैव क्रिया दर्शयते भवः इति चतुर्थकक्षायामुच्यते । एवञ्च क्रियासाम्यात् प्रथमकक्षायां भवरूपकर्मणः कर्तृत्वाच्चात्मनेपदं सिद्धं भवति । एवं कर्तृस्थक्रियायामारोहयते हस्तीत्यत्रापि अथवा पश्यन्ति भवमारोहन्ति हस्तिनमिति प्रथमकक्षायामेव कर्मणो हेतुरूपारोपाण्णिचि दर्शयति भवः आरोहयति हस्तीति । ततश्च णिजर्थव्यापारस्य अध्यारोपितकर्तृव्यापारस्य च त्यागेन दर्शयते भव इति तृतीयकक्षायामेव तङ् भवति । न च भवरूपकर्मणः कर्तृत्वाद् दर्शयति भवो भक्तानिति द्वितीयकक्षायां कथं तङ् न स्यादिति वाच्यम् । अध्यारोपितकर्तृव्यापारेण साम्येऽपि णिजर्थव्यापारस्याविक्येन समानक्रियत्वाभावात् । तृतीयकक्षायान्तु धातूपात्तव्यापारस्य णिजर्थव्यापारस्य च त्यागेन समानक्रियत्वात्तङ् सिद्धः । न च तृतीयकक्षायामपि चाक्षुषज्ञानविषयकरणरूपव्यापारयुक्तायाः पश्यन्ति भवं भक्ता इति प्रथमकक्षाभिप्रायाया अपेक्षया न्यूनता स्यादिति वाच्यम्' एवकारेणाऽधिकांशस्यैव निस्सारितत्वात् ।

परिमोहयते—अस्योत्तरं ४१ वर्षे द्रष्टव्यम् ।

स्वं यज्ञं यजति—अत्र स्वशब्देन फलस्याऽऽत्मगामित्वावगमात् "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्यनेन नित्यात्मनेपदं प्राप्तं "विभाषोपपदेन प्रतीयमाने" इत्यनेन विभाषया भवति तेन विकल्पपक्षे "स्वं यज्ञं यजति" इति बोध्यम् । अत्र 'स्वम्' इत्यस्य स्वीयमित्यर्थः ।

संवदते—अस्योत्तरं ३७ वर्षे द्रष्टव्यम् ।

एधोदकस्योपस्कुरुते—अत्र "गन्धना-ऽवक्षेपण-सेवन-साहसिक्य-प्रतियत्न-प्रकथनोपयोगेषु कृञः" इत्यनेन प्रतियत्नेऽर्थे आत्मनेपदं भवति । प्रतियत्नो गुणाधानम् ।

प्रकृते "अवोदैधौद्मप्रश्रथहिमश्रथाः" इति सूत्रे निपातितोऽदन्त एधशब्दो गृह्यते चेत्तदा एधाश्च उदकञ्च एधोदकं तस्य एधोदकस्येति बोध्यम् । यदि सान्तो गृह्यते तदा एधांसि च दकं चेति विग्रहः दकशब्दोऽप्युदकवाची एव—"प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं च" इति हलायुधकोशादिति दिक् ।

क्रमन्तेऽस्मिन् शास्त्राणि—अत्र "वृत्ति-सर्ग-तायनेषु क्रमः" इति सूत्रेण तायनेऽर्थे क्रमधातोरात्मनेपदं भवति । तायनं वृद्धिः । क्रमन्तेऽस्मिन् शास्त्राणि स्फीतानि भवन्तीत्यर्थः ।

५—भूयते—भावे प्रत्यये कर्तुस्तिङ्वाच्यत्वाऽभावेन अनभिहितत्वात् अनभिहिते कर्तरि तृतीया भवति। एवञ्च-"त्वया मया अन्यैश्च भूयते" इति भवति। ननु [illegible] लकारस्य एकवचनमेव भवति, द्विवचनादिः कुतो नेति वाच्यम्? तिङ्वाच्या या भावना क्रिया सा शब्दशक्तिस्वभावात् असत्त्वरूपा (लिङ्गसंख्यान्वयाऽयोग्या) ततश्च तस्यां तिङ्वाच्यभावनायां द्वित्वबहुत्वयोरप्रतीतेः।

आश्रिता—अस्योत्तरं विषयसूच्या द्रष्टव्यम्।

अशमि—शम्धातोर्लुङि तिपि अडागमे च्लेश्चिणि "चिण्ते पदः-" इति तशब्दस्य लोपे "अशमि" इति। "अत उपधायाः" इति वृद्धिस्तु न, "नोदात्तोपदेशस्य मान्तस्याऽनाचमेः" इति निषेधात्।

बोध्यते माणवकं धर्मः—बुध्यर्थकस्याऽपि प्रधाने गौणे वा कर्मणि स्वेच्छया लादयो भवन्ति। अत एव-बोध्यते माणवकं धर्मः—"बोध्यते माणवको धर्मम्" इति वा भवतीति।

बीजञ्चात्र मूलस्थ-द्विकर्मणां धातूनां कर्मप्रत्ययस्य व्यवस्थैव। तथाहि—

"गौणे कर्मणि दुह्यादेः प्रधाने नी-हृ-कृष्-वहाम्।
बुद्धि-भक्षार्थयोः शब्दकर्मकाणां निजेच्छया॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः॥" इति।

दुह्याच्-प्रभृतीनां द्वादशधातूनां गौणे कर्मणि लादयो भवन्ति। गौर्दुह्यते पयः। गोपेनेति शेषः। अत्र गोरप्रधानकर्मत्वात् तस्मिन् कर्मणि लकारः। तिङा अभिहितत्वात् गोः प्रथमा। प्रधानकर्मत्वात् पयः इति द्वितीयान्तम्। नी-हृ-कृष्-वहां प्रधाने कर्मणि लादयो भवन्ति। अजा ग्रामं नीयते, ह्रियते, कृष्यते, उह्यते। अत्र अजायां प्रधानकर्मणि लकारः। ग्रामस्याऽनभिहितत्वात् द्वितीया। बुध्यर्थकस्य भक्षार्थकस्य शब्दकर्मणाञ्च प्रधाने वा गौणे वा कर्मणि स्वेच्छया लादयो भवन्ति। बोध्यते माणवको धर्मम्। बोध्यते माणवकं धर्मः इति वा। भोज्यते माणवकमोदनः। भोज्यते माणवकः ओदनमिति वा। वेदोऽध्याप्यते विधिं हरिणा, वेदमध्याप्यते विधिरिति वा। अन्येषां गत्यर्थादीनां प्रयोज्यकर्मणि लकारः। देवदत्तो ग्रामं गम्यते, अत्र प्रयोज्यकर्मणि देवदत्ते इति गमेर्ण्यन्तात्कर्मणि लः।

गच्छति ग्रामः—अस्योत्तरं ४२ वर्षे द्रष्टव्यम्।

तपस्तप्यते तापसः—अत्र "तपस्तपःकर्मकस्यैव" इति सूत्रेण कर्त्ता कर्मवद् भवति। तपिरत्र अर्जनार्थकः। तपस्तप्यते तापसः = प्राजापत्यचान्द्राय-

चान्द्रायणादिकृच्छ्रात्मकं तपः सम्पादयतीत्यर्थः। मुख्यकर्तरि लकारः। सम्पादनस्य तापसात्मककर्तृस्थत्वात्तपोरूपकर्मस्थत्वाऽभावात् "कर्मवत्कर्मणे"त्यप्राप्तं कर्मवत्त्व-मनेन सूत्रेणाऽत्र विधीयते। तेन यगात्मनेपदादीति लब्धम्।

**यच्च यत्र वा त्वमेवं कुर्याः**—यच्चेति समुदाये यत्रशब्दे च प्रकृतेऽस्मिन् अनवक्लृप्त्यमर्षयोर्लिङ् स्यादित्यर्थक—"**यच्चयत्रयोः**" इति सूत्रेण अत्र लृट-मपवाद्य लिङ् भवति। अत्रोदाहरणे यच्चेति यत्रेति च अनवक्लृप्त्यमर्षद्योतकौ। त्वमेवं कुर्याः इत्येतन्न श्रद्दधे न मर्षयामि वेत्यन्वयो बोध्यः।

**६—चत्यम्**—इदित्संज्ञक-चत्धातोः "**तकि-शसि-चति-यति-जनि-भ्यो यद्वाच्यः**" इति वार्तिकेन यत्प्रत्यये कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे च "**चत्यम्**" इति।

**वध्यः**—'हन्' धातोः "**हनो वा तद्वधश्च वक्तव्यः**" इति वार्तिकेन यत्प्रत्यये हनो वधादेशे च कृते कृदन्तत्वात् सौ रुत्वे विसर्गे "**वध्यः**" इति। यदभावपक्षे तु-"**ऋहलोर्ण्यत्**" इति ण्यत्प्रत्यये "**हनस्तोऽचिण्णलोः**" इति नकारस्य तकारे "**हो हन्तेः**" इति कुत्वे उपधावृद्धौ कृदन्तत्वात् सौ रुत्वे विसर्गे घात्यः इति भवति। वधादेशस्तु न, यत्सन्नियोगशिष्टत्वेन विहितत्वात्।

**शिष्यः—अस्योत्तरं ३८ वर्षे द्रष्टव्यम्।**

**भव्यः**-भवतीति भव्यः। भूधातोः "**तयोरेवे**"ति नियमात् "**अचो यत्**" इत्यस्याऽप्राप्त्या "**भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा**" इत्यनेन निपातनात् "**भव्यः**" इति भवति।

**पाटूपटः**—पाटेर्णौ पाटि तस्मात् "**नन्दि-ग्रहि-पचादिभ्यो ल्युणि-न्यचः**" इत्यनेन अचि तस्मिन् परे "**पाटेर्णिलुक् चोक्च दीर्घश्चाभ्यासस्य**" इति वार्तिकेन णेर्लुकि द्वित्वे अभ्यासस्य ऊगागमे अभ्यासाकारस्य ह्रस्वे तस्य दीर्घे च कृते कृदन्तत्वात् सौ रुत्वे विसर्गे "**पाटूपटः**" इति जातम्।

न च हलादिशेषेण टकारस्य निवृत्तिः कुतो नेति वाच्यम्? तथा सति आद्गुणे कृते "**पोपटः**" इति रूपस्य उगागमे कृतेऽपि सिद्धे ऊगागमे दीर्घोच्चारणस्य वैयर्थ्यं स्यात्।

**आखूत्थः**—"**सुपि स्थः**" इत्यत्र सुपि उपपदे आदन्तात् कः स्यादित्य-र्थक-'**सुपि**' इत्येको योगः। सुपि तिष्ठतेः कः स्यादित्यर्थक '**स्थ**' इत्यपरो योगः एवं च कर्त्तरि "**सुपि**" इति पूर्वयोगेनैव सिद्धे "**स्थ**" इति द्वितीययोगसामर्थ्यात्

सुपि तिष्ठतेः भावे एव कः स्यादिति विज्ञायते। ततश्च आखूनामुत्थानमाखूत्थः इत्यत्र सुबन्तोपपदात् स्था धातोः द्वितीययोगेन कप्रत्यये "आतो लोपः" इत्यालोपे "उदः स्थास्तम्भोः पूर्वस्य" इत्यनेन उदः परस्य सस्य थकारे उदो दस्य चर्त्वे कृदन्तत्वात् सौ रुत्वे विसर्गे "आखूत्थः" इति सिद्धम्।

कवचहरः—"वयसि च" इति सूत्रेण 'हृ' धातोः अच्प्रत्यये गुणे कृदन्तत्वात् सौ रुत्वे विसर्गे "कवचहरः" इति। ननु "हरतेरनुद्यमने" इत्यनेनैव अच् सिद्धे किमर्थमिदमिति चेन्न, उद्यमानार्थे तस्याऽऽवश्यकत्वात्।

पूर्वसरः—अस्योत्तरं ३६ वर्षे द्रष्टव्यम्।

शुनिन्धयः-शुनीं धयतीति शुनिन्धयः। "वात-शुनी-तिल-शर्द्धेष्वज-धेट-तुद-जहातिभ्यः खश उपसंख्यानाम्" इति वार्तिकेन धेट्धातोः खश्प्रत्यये "खित्यनव्ययस्य" इति खिदन्ते परे पूर्वपदस्य ह्रस्वे "अरु-द्विषद्-जन्तस्य मुम्" इति मुमि कृदन्तत्वात् सौ रुत्वे विसर्गे "शुनिन्धयः" इति।

दुर्गः—दुःखेन गच्छतीत्यत्र दुर्गः "सुदुरोरधिकरणे" इत्यनेन दुरुपपदे गम्धातोर्डप्रत्यये अनुबन्धलोपे कृदन्तत्वात् सौ रुत्वे विसर्गे 'दुर्गः' इति सिद्धम्।

अन्नादः—अन्नमत्त्यत्र "अन्नादः"। कर्मण्यण् भवति। "अदोऽन्ने" इति सूत्रस्य प्रत्युदाहरणमेतत्। तत्र हि अनन्ने इत्यस्याभावे अत्रापि विट्स्यादिति भावः।

अग्रेभ्रूः—अग्रे भ्रमतीत्यत्र "अग्रे भ्रूः"। "ऊङ् च गमादीनामुपसंख्यानम्" इति वार्तिकेन अमेरकारस्य ऊभावे चकारादनेनैव अन्त्यस्य मस्य लोपे "तत्पुरुषे कृति बहुलम्" इत्यनेन सप्तम्या अलुकि कृदन्तत्वात् सौ रुत्वे विसर्गे "अग्रेभ्रूः" इति जातम्।

क्षितः कामः—'क्षि क्षये' इत्यस्मादन्तर्भावितण्यर्थात् कर्मणि निष्ठायां क्तप्रत्यये कृदन्तत्वात् सौ रुत्वे विसर्गे "क्षितः" इति। ण्यदर्थो भावकर्मणी ततोऽन्यत्र निष्ठायां "निष्ठायामण्यदर्थे" इत्यनेन क्षियो दीर्घविधानादत्र दीर्घो न। अत एव "क्षियो दीर्घात्" इत्यनेन नत्वञ्च न भवति, निष्ठातस्य दीर्घात् परत्वाऽभावात्।

उदक्तमुदकं कूपात्—"अञ्चोऽनपादाने" इत्यस्य प्रत्युदाहरणमेतत्। अत्राऽपादानसमभिव्याहारसत्त्वात् नत्वं न। 'अनपादाने' इत्यनुक्तौ त्वत्रापि नत्वं दुर्वारं स्यादिति भावः।

फुल्लः—'ञिफला विशरणे' अस्मात् निष्ठायां क्तप्रत्यये "अनुपसर्गात्फुल्ल-क्षीब-कृशोल्लाघाः" इत्यनेन निपातनात् निष्ठातस्य लत्वे, "आदितश्च"

इत्यनेन इडुनिषेधे सति "ति च" इत्यनेन उत्वे कृदन्तत्वात् सौ रुत्वे विसर्गे "फुल्लः" इति सिद्धम्।

नच "ति च" इत्यनेन "एकानुबन्धक" परिभाषया 'फल निष्पत्तौ' इत्यस्यैव उत्वं स्यादिति वाच्यम्? प्रस्तुतपरिभाषाया असार्वत्रिकत्वेन प्रकृतसूत्रे उभयोर्ग्रहणस्य व्याख्यातत्वात्।

७—वृत्तं छन्दः—ण्यन्तात् वृतधातोः कर्मणि क्तप्रत्यये सति "णेरध्ययने वृत्तम्" इति सूत्रेण अधीयमानेर्थे निपातनात् क्तस्येडभावे णेर्लुकि कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे च "वृत्तं छन्दः" इति। णिलोपे तु प्रत्ययलक्षणे लघूपधगुणः स्यादिति ध्येयम्।

वैकुण्ठमधिष्ठितः"—'अधि' उपसर्गात् स्थाधातोः "गत्यर्थाऽकर्मक-श्लिष-शीङ्-स्था-ऽस-वस-जन-रुह-जीर्यतिभ्यश्च" इति सूत्रेण कर्तरि क्तप्रत्यये "द्यति-स्यति" इति इत्वे षत्वे ष्टुत्वे कृदन्तत्वात् सौ रुत्वे विसर्गे "वैकुण्ठमधिष्ठितः" इति। वैकुण्ठे स्थितवानित्यर्थः।

अनूचानः—अनुपूर्वात् वच्धातोः "उपेयिवाननाश्वाननूचानाश्च" इति सूत्रेण निपातनात् कर्तरि कानच्प्रत्यये अनुबन्धलोपे कानचि यजादित्वात् वकारस्य संप्रसारणे पूर्वरूपे सवर्णदीर्घे कृदन्तत्वात् सौ रुत्वे विसर्गे "अनूचानः" इति। वेदस्यानुवचनं कृतवानित्यर्थः।

विविदिवान्—विद् धातोर्लिटि तत्स्थाने छन्दसि भूते लिटः क्वसुश्चादेशः इत्यर्थक-"क्वसुश्च" इत्यनेन क्वसुप्रत्यये अनुबन्धलोपे द्वित्वादिकार्ये वि विद् वस् इति स्थिते "विभाषा गम-हन-विद-विशाम्" इत्यनेन विभाषया इटि "उगिदचामि"ति नुमि "सान्तमहतः" इति दीर्घे संयोगान्तलोपे कृदन्तत्वात् सौ तस्य लोपे "विविदिवान्" इति सिद्धम्। इडभावपक्षे "विविद्वान्" इति भवति।

शयाना भुञ्जते यवनाः—अत्र शयनं भुज्यर्थपरिचायकं तस्मिन् अर्थे शीङ्धातोर्लिटि तत्स्थाने "लक्षणहेत्वोः क्रियायाः" इति सूत्रेण शानचि अनुबन्धलोपे गुणे अयादेशे प्रथमाबहुवचने कृदन्तत्वाज्जसि अनुबन्धलोपे सकारस्य रुत्वे यत्वे यलोपे "शयना भुञ्जते यवनाः" इति। अत्र भोजनकालीनं शयनं भोक्तुर्यवनत्वसूचकम्।

यायजूकः—यङन्तात् यज्धातोः "यज-जप-दशां यङः" इति सूत्रेण

ऊकप्रत्यये द्वित्वादिकार्ये य-यज् य ऊक् इति स्थिते "यस्य हलः" इति यलोपे "अतो लोपः" इत्यलोपे "दीर्घोऽकितः" इत्यनेन अभ्यासस्य दीर्घे कृदन्तत्वात् सौ रुत्वे विसर्गे "यायजूकः" इति सिद्धम् ।

**जज्ञिः**—जन् धातोः "आदृ-गम-हन-जनः कि-किनौ लिट् च" इति सूत्रेण किप्रत्यये, किन् प्रत्यये वा कृते लिड्वद्भावे च विहिते द्वित्वादिकार्ये "जज्ञिः" इति । कि-किनोस्तु स्वरे विशेषः ।

**सेक्त्रम्**—सिच्धातोः करणेऽर्थे "दाम्नी-शस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः करणे" इति सूत्रेण ष्ट्रन् प्रत्यये अनुबन्धलोपे "ति-तु-त्र-त-थ-सि-सु-सर-क-सेषु च" इति सूत्रेण इण्निषेधे गुणे कुत्वे कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे "सेक्त्रम्" इति ।

**द्रष्टुं याति**—अस्योत्तरं "कृष्णं द्रष्टुं याति" इति साधनावसरे ४१ वर्षे द्रष्टव्यम् ।

**अपघनः**—अपहन्त्यनेनेति विग्रहे अपपूर्वात् हन्धातो "अपघनोऽङ्गम्" इति सूत्रेण अप्प्रत्यये हस्य घत्वे "अपघनः" इति निपातनात् सिद्धम् ।

**प्रह्लन्निः**—प्रपूर्वात् ह्लाद्धातोः "स्त्रियां क्तिन्" इत्यनेन क्तिन् प्रत्यये 'ऋ-ल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः' इति वार्तिकेन निष्ठावद्भावे 'रदाभ्याम्' इत्यनेन तकारस्य नत्वे 'ह्लादो निष्ठायाम्' इत्यत्र 'ह्रद' इति योगविभागेन अनिष्ठायामपि क्वचिद् ह्रस्वविधानात् क्तिनि प्रत्यये परे ह्रस्वे कृदन्तत्वाद् सौ रुत्वादिकार्ये 'प्रह्-न्निः' इति । भाष्ये तु एतदनभिधानात् 'प्रह्लत्तिः' इति केचित् ।

**स्मारं स्मारं नमति**—पौनः पुन्ये द्योत्ये 'समानकर्तृकयोः पूर्वकाले' इत्यर्थे स्मृधातोः 'आभीक्ष्ण्ये णमुल् च' इति सूत्रेण णमुल् प्रत्यये सति 'नित्यवीप्सयोः' इत्यनेन द्वित्वे वृद्ध्यादिकार्ये 'स्मारं स्मारं नमति' इति । क्त्वाप्रत्यये तु-'स्मृत्वा स्मृत्वा' इति भवति ।

**गोष्पदप्रम्**—अस्योत्तरं ४१ वर्षे द्रष्टव्यम् ।

**निमूलकाषम्**—निमूले कर्मण्युपपदे 'निमूल-समूलयोः कषः' इत्यनेन कषेर्णमुलि वृद्ध्यादिकार्ये 'निमूलकाषम्' इति । नियतं मूलमस्य निमूलम् । निमूलकषणाभिन्नं कषणमिति बोधः ।

**ऊर्ध्वंशोषम्**—ऊर्ध्वे कर्तरि उपपदे शुषेः 'ऊर्ध्वे शुषि-पुरोः' इत्यनेन णमुलि गुणादिकार्ये 'ऊर्ध्वशोषम्' 'शुष्यति' इति शेषः। वृक्षादिरूर्ध्वं एव तिष्ठन् शुष्यतीत्यर्थः ।

गेहानुप्रवेमास्ते—अस्योत्तरं ४० वर्षे द्रष्टव्यम्।

८—अथ कथं भार्या वधूरिति—ननु 'भृञोऽसंज्ञायाम्' इति सूत्रे भार्याः क्षत्रिया इति पुँल्लिङ्गे संज्ञायां क्यपोऽभावं कुर्वत्सच रितार्थमिति स्त्रीलिङ्गे संज्ञायां न प्रवर्तिष्यते इति भार्या वधूरित्यत्र 'संज्ञायां समजनिषद्' इत्यादिना क्यपा भाव्यमिति चेत्, न। 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इति परिभाषया 'डुभृञ् धारणपोषणयोः' इत्यस्मात् क्र्यादिपठितदीर्घान्तात् भॄ भरणे इत्यस्मात् वा ण्यन्तप्रत्ययस्य सिद्धत्वात्। 'संज्ञायां समजनि' इत्यादि सूत्रे ह्रस्वान्तभृञ्धातोः पाठेन दीर्घान्तभृञधातुविषये तत्सूत्राऽप्रवृत्तिः। डुभृञ्धातौ अनुबन्धद्वयं वर्तते भृञ्धातौ चैकानुबन्धो वर्तते, इति डुभृञ्धातुविषयेऽपि तत्सूत्राऽप्रवृत्तिरिति दिक्।

प्रकृतो मितां ह्रस्व एव तु न विकल्पः—ननु "चिण्णमुलोः" इति सूत्रे दीर्घग्रहणं व्यर्थम्, "चिण्णमुलोरन्यतरस्याम्" इत्येतावतैव "मितां ह्रस्वः" इति पूर्वसूत्रादनुवृत्तस्य ह्रस्वस्यैव विकल्पे दीर्घविकल्पाऽसिद्धेरिति चेत् न। शमधातोर्ण्यन्ताण्णौ पूर्वं णेर्लोपे लुटि तासि ण्यन्तस्याऽनादित्वाच्चिण्वदिटं तस्याऽऽभीयत्वे-नाऽसिद्धतया अनिटीति निषेधाभावाण्णिलोपे दीर्घविकल्पे सति शमिता—शामितेति रूपद्वयमिष्यते, ह्रस्वविकल्पविधाने तु ह्रस्वविकल्पो न स्यात्, प्रथमणिलोपस्य "अचः परस्मिन्" इति स्थानिवत्त्वेन व्यवहिततया चिण्परकणिपरकत्वाभावात्। दीर्घविकल्पविधौ तु प्रथमस्य णिचो लोपो न स्थानिवत् दीर्घविधौ स्थानिवत्त्वनिषेधात्। भाष्यकारस्तु—"न पदान्त" इति सूत्रे "पूर्वत्रासिद्धं न स्थानिवत्" इत्येव सिद्धत्वात् तत्र द्विर्वचनसवर्णानुस्वारदीर्घजश्चरविधीन् प्रत्याख्यातवान्। नच ण्यन्ताण्णौ "चिण्मुलोः" इति दीर्घे कर्तव्ये प्रथमणिलोपस्य स्थानिवत्त्वं दुर्वारम्, "चिण्णमुलोः" इति दीर्घस्य पूर्वत्रासिद्धीयत्वाभावात्। ततश्च प्रथमणिचा व्यवहितत्वात् दीर्घानापत्तिः। एवञ्च तत्र दीर्घे कर्त्तव्ये स्थानिवत्त्वनिवारणाय दीर्घग्रहणस्यावश्यकत्वात् कथं दीर्घग्रहणस्य प्रत्याख्यानमिति चेत्, न। "चिण्णमुलोः" इति दीर्घविधौ णाविति णित्वजातिप्रधानो निर्देशः। चिण्णमुल्परकणित्वजातौ परत इति यावत्। णित्वजातिश्च णिद्वयेऽस्तीति प्रथमणेः स्थानिवत्त्वेऽपि दीर्घस्य निर्बाधत्वात्। एवञ्च ह्रस्वदीर्घयोर्विशेषाभावात् ह्रस्वविकल्प एव क्रियतां मास्तु दीर्घग्रहणमिति भाष्यकाराशयः।

---

## णिजन्तादि-उत्तरकृदन्तान्तभागे प्रश्नाः।

१९४४

१—अचचकासत्। तितंसति। परीपृच्छयते। अतातः। सपतीयते। एतान् संसाध्य विस्मापयन्निति षकारघटितः प्रयोगः समर्थनीयः।

२—अपप्रथत्। असीषमत्। जापयति। जटाभिर्लापयते। सोसूचिता। अतितिरायत। अरारिता। शाशय्यते। एषु षट् प्रयोगान् संसाध्य स्तौतिण्योरेवेति सूत्रे एवकारस्य प्रयोजनं प्रतिपाद्यताम्।

३—उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके इत्यादिफक्किकार्थे किं मानं, किञ्च तत् फलं कथञ्च ओढायित्वा इत्यत्र न पृथक्करणमित्येतत् सकलं विशदं व्याख्यायताम्।

अथवा—

एतुमिच्छति। उदकमिच्छति। भाण्डानि समाचिनोति। त्वामाचष्टे। इति विग्रहे सिद्धरूपाणि सप्रमाणं प्रदर्श्य सर्वप्रातिपदिकेभ्यः इत्येव सिद्धे आचारे अवगल्भेति वार्तिकं किमर्थमारब्धं वार्तिककृतेति प्रतिपाद्यताम्।

४—उररयति। बोभूयिषति। धनुषि शिक्षते। सुस्मूर्षते। प्रावयति। अगीढ्वम्। दासीष्ट। अवाकीर्ष्ट। उदपुपुच्छत। भवान् यजताम्। एषु साधनप्रणाली प्रकटनीया।

५—"णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने" इति सूत्रं व्याख्याय कर्तृस्थभावक-कर्तृस्थक्रिययोरुदाहरणं च प्रदर्श्य तत्स्वरूपं प्रतिपाद्यताम्।

६—वाग्यम्। पाटूपटः। विहङ्गः। जित्वरः। सूत्तम्। शुश्रुवान्। वर्तिष्णुः। दन्दशूकः। यायावरः। इमे सविग्रहं साधु साधनीयाः।

७—वष्टि भोक्तुम्। नीकाशः। अभिनिष्टानः। प्रक्वणः। द्रुघनः। गीर्णिः। श्रद्धा। आढ्येन सुभूयते। पाणिनोपकर्षम्। तिर्यक्कारं गतः। एषु ससूत्रनिर्देशं विशेषकार्यं प्रदर्शनीयम्।

८—नोदात्तोपदेशस्य मान्तस्यानाचमेः, क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः, तुन्दशोकयोः परिमृजापनुदोः, परिक्लिश्यमाने च सोदाहरणनिर्देशमेनेषामर्था लेख्याः।

६—सन्नन्तात्-यङन्ताद्वा गमधातोः कर्मणि प्रत्यये लटि प्रथमपुरु-षैकवचने कीदृग् रूपमिति विविच्य विलिख्यताम्।

## प्रश्नोत्तराणि।

**१—अचचकासत्**—अस्योत्तरं ४२ वर्षे द्रष्टव्यम्।

**तितंसति**—तन्धातोः सनि धातुसंज्ञायां लटि तिपि इपावितौ 'सन्यङोः' इत्यनेन द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'सन्यतः' इत्यनेन इत्वे 'तनिपतिदरिद्रा-तिभ्यः सनो वा इड्वाच्यः' इति वार्तिकेन इटि प्रत्ययावयवत्वात् सकारस्य षत्वे सार्वधातुकसंज्ञायां शपि पूर्वरूपे 'िततनिषति' इति। इडभावपक्षे—'तनोतेर्वि-भाषा' इत्यनेन उपधाया दीर्घे 'तितांसति' इति दीर्घाभावे 'तितंसति' इति भवति।

**परीपृच्छ्यते**—प्रच्छ्धातोर्यङि 'सनाद्यन्ता' इत्यनेन धातुसंज्ञायां लटि आत्मनेपदे तप्रत्यये एत्वे 'ग्रहिज्ये' ति रेफस्य सम्प्रसारणे ऋकारे पूर्वरूपे 'सन्यङोः' इत्यनेन द्वित्वे अभ्याससंज्ञायाम् उरदत्वे रपरत्वे हलादिशेषे प पृच्छ्य ति इति स्थिते शपि पूर्वरूपे 'रीगृदुपधस्य च' इत्यनेन रीगागमे 'परीपृच्छ्यते' इति।

ननु धातोरकारोपधत्वेन ऋदुपधत्वाभावात् 'रीगृपुपधस्य चे'त्यनेन कथं रीगिति चेत्? न, रीदुपधस्येत्यत्र ऋदुपधस्येत्यपनीय 'ऋत्वत' इति वक्तव्यम्। इत्यभिप्रायक-'रीगृत्वत इति वक्तव्यम्' इति वार्तिकस्य जागरूकत्वात्।

**अतातः**—अस्योत्तरं ४० वर्षे द्रष्टव्यम्।

**सपतीयते**—अस्योत्तरं ४१ वर्षे द्रष्टव्यम्।

**विस्मापयन्**—अस्योत्तरं ४२ वर्षे द्रष्टव्यम्।

२—**अपप्रथत्**—'प्रथ प्रख्याने' अस्मात् स्वार्थे णिचि 'सनाद्यन्ता' इति धातुत्वात् लुङि तिपि इपावितौ अडागमे 'च्लि लुङि' इति च्लौ 'णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ्' इत्यनेन च्लेश्चङि 'चङि' इत्यनेन द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'सन्यतः' इतीत्वे प्राप्ते तं प्रबाध्य 'अत्-स्मृ-दॄ-त्वर-प्रथ-म्रद-स्तॄ-स्पशाम्' इत्यनेन अभ्यासस्याऽत्वे 'णेरनिटि' इत्यनेन णिलोपे 'अपप्रथद्' इति सिद्धम्।

**असीषमत्**—'साम सान्त्वने' इति कथादेः प्राक् चुरादौ पठितस्य रूपम्। तद्धि-'साम्' धातोर्णिचि धातुसंज्ञायां लुङि तिपि इपावितौ अडागमे मध्ये च्लौ 'णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि द्वित्वे अभ्याससंज्ञायां 'ह्रस्वः' इत्यभ्यासस्याऽकारस्य ह्रस्वे हलादिशेषे 'सन्यतः' इति इत्वे 'दीर्घो लघोः' इति दीर्घे 'णेरनिटि' इति णिलोपे षत्वे 'असीषमत्' इति। उपदेशे 'षाम्' इति धातुः।

यद्यपि 'साम सान्त्वप्रयोगे' इत्येव कथादेः प्राक् चुरादौ पठितं न तु 'साम सान्त्वने' इति, तथापि सान्त्वनस्य सामप्रयोगादनन्यत्वात्तथोक्तिरिति कौमद्याशयः।

आजापयति—'जि जये' अस्माण्णिचि वृद्धौ 'क्रीङ्जीनां णौ' इत्यनेन आत्वे पुकि 'जापि' इत्यस्य 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां लटि तिपि शपि गुणे अयादेशे पूर्वरूपे 'आजापयति' इति सिद्धम्।

**जटाभिर्लापयते**—लीधातो'र्हेतुमति चे'ति णिचि 'प्रलम्भना-ऽभिभव-पूजासु लियो नित्यमात्वमशिति वाच्यम्' इति वार्तिकेन णिजिविषये नित्यात्वे पुकि लापी-त्यस्य धातुसंज्ञायां लटि 'लियः सम्माननशालिनीकरणयोश्च' इत्यनेन आत्मनेपदे तप्रत्यये एत्वे शपि गुणे अयादेशे पररूपे च 'लापयये' इति। 'जटाभिर्लापयये' इत्य-स्य पूजामधिगच्छतीत्यर्थः।

**सोसूचिता**—'सूच पैशून्ये' इति चुरादिगणपठितादन्तात् 'सूच' धातोः स्वार्थे णिचि अलोपे 'सूचि' इति, तस्मात् 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इत्यनेन अनेकाच्त्वात् यङोऽप्राप्तया 'सूचि-सूत्रि-मूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ्वाच्यः'' इत्यनेन यङि णिलोपे 'सन्यङोः' इति द्वित्वे अभ्यासंज्ञायां हलादि-शेषे 'गुणो यङ्लुकोः' इत्यनेन अभ्यासोकारस्य गुणे यङन्तस्य 'सनाद्यन्ताः' इति धातुसंज्ञायां लुटि 'स्यतासी लृलुटोः' इत्यनेन तासिप्रत्यये 'आर्द्धधातुकस्येड्व-लादेः' इत्यनेन इटि 'लुटः प्रथमस्ये' ति डादेशे टिलोपे सोसूच य इ ता इति स्थिते 'यस्य हलः' इत्यनेन यकारस्य लोपे 'अतो लोपः' इत्यनेन परिशिष्टस्य यकारोत्तराकारस्य लोपे 'सोसूचिता' इति। उत्तरखण्डस्य षत्वन्तु न, धातोरनेका-च्त्वेनाऽषोपदेशत्वादादेशसकाराऽभावात्।

**अतितिरायत्**—तिर्यञ्चमाचष्टे इत्यर्थे णिचि इष्टवद्भावेन टिलोपे तस्य बहिरङ्गत्वेनाऽसिद्धत्वात् तिरसस्तिर्यादेशे वृद्धौ आयि 'तिरायि' इत्यस्य धातुसंज्ञायां लुङि तिपि अडागमे मध्ये च्लौ चङि द्वित्वादिकार्ये णिलोपे 'अतितिरायत्' इति।

न चात्र टिलोपेन अञ्चधातुत्वाभावात् कथं तिर्यादेशः इति वाच्यम्? 'असि-द्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया तिर्यादेशे कर्तव्ये टिलोपस्याऽसिद्धत्वेन अञ्च-धातुत्वसत्त्वात्। न च तिर्यादेशे कृते पुनष्टिलोपः स्यादिति वाच्यम्? यथा अपा-चितरामित्यत्र 'असिद्धवदत्राभात्' इति सूत्रेण प्रथमतलोपस्याऽसिद्धत्वेन तरप्घट-कतकारस्य पुनः 'चिणो लुक्' इति सूत्रेण लुक् न भवति, तथाऽत्रापि प्रथमटिलो-पस्यासिद्धत्वेन पुनष्टिलोपाभावात्। 'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्' इति परिभाषया

धा पुनश्चिलोपाभावाच्चेति । नच प्रकृते उपधाह्रस्वः कुतो नेति वाच्यम् ? ऋग्लोपित्वेन 'नाग्लोपिशास्वृदिताम्' इत्यनेन निषेधात् ।

अरारिता—अस्योत्तरं ३६ वर्षे द्रष्टव्यम् ।

शाशय्यते— ,, ४२ वर्षे ,,

स्तौतिण्योरिति सूत्रे—एवकारस्य प्रयोजनम्—अत्र सूत्रे एवकारग्रहणं ज्ञापयति—'अभ्यासेणः परस्य सस्य षत्वञ्चेत् ? तर्हि स्तौतिण्यन्तयोरेव' । नच 'आदेशप्रत्ययोः' इत्येव षत्वे सिद्धे आरम्भसामर्थ्यादेव नियमलाभादेवकारो व्यर्थ एवेति वाच्यम् ? 'षण्येवे'ति नियमनिरसनार्थन्तस्यावश्यकत्वादन्यथा 'सुष्वाप' इत्यत्र षत्वाऽनापत्तेरिति दिक् ।

३—उपसर्गसमानाकारमिति—ननु सुमनश्शब्दात् क्यङ्विधानेन सुमनश्शब्दस्याऽङ्गसंज्ञासत्त्वात् सुशब्दात् प्रागेवाट् भविष्यतीति चेन्न, 'संग्रामयुद्धे' इत्यत्र युद्धे संग्रामशब्दः स च समुपसर्गविशिष्ट एवास्ति न केवलग्रामशब्दः, ततः ग्रामशब्दपाठेनैव संग्रामशब्दलाभे समुपसर्गविशिष्टो व्यर्थीभूय ज्ञापयति'धातुसंज्ञाप्रयोजकीभूतप्रत्ययस्य चिकीर्षितत्वे उपसर्गसमानाकारकपूर्वपदस्य पृथक्करणं भवती'ति तात्पर्यात् । तेन 'स्वमनायत' इत्यादौ सूपसर्गस्य पृथक्करणं फलं भवति । अथ च ज्ञापकस्य सजातीयापेक्षत्वेन यत्रोपसर्गस्य सम्पूर्णरूपेण स्थितिस्तत्रैव पृथक्करणं भवति । यत्र तु गुणादेशेनोपसर्गस्याऽपहरणं भवति, तत्र पृथक्करणं न भवति । ततश्च ओढ इव आचर्येति विग्रहे निष्पन्नस्य 'ओढायित्वा' इत्यत्र आङः पृथक्करणाऽभावेनाऽव्ययपूर्वपदत्वाभावात् ल्यब् न भवतीति फलम् । ज्ञापकस्य विशेषापेक्षकत्वे 'उस्योमाङ्क्ष्वाटः प्रतिषेधो वक्तव्यः' इति वर्तिकं तत्प्रत्याख्यानपरकम्; 'आटश्च' इति सूत्रे चकारग्रहणञ्च प्रमाणम् । अन्यथा 'ओढीयत्' इत्यादौ धातुसंज्ञायां कर्त्तव्यायाम् 'आङः' पृथक्करणेन 'ओमाङोश्च' इति सूत्राऽप्रवृत्तौ वार्तिकं व्यर्थमेव । एवञ्च पररूपादिकार्याप्रवृत्तौ पुनर्वृद्धिविधानार्थं चकारग्रहणमपि व्यर्थम् । 'आटश्च' इति सूत्रे चकारग्रहणम् "आटश्च" इति वृद्धिविषये यद्यत् कार्यं प्राप्नोति तत्तत्सर्वं निवारयति, चकारग्रहणेनैव पररूपन्न स्यादिति वार्तिकं निष्प्रयोजनमिति तद्भगवता प्रत्याख्यातमिति दिक् ।

## अथवा प्रश्नोत्तराणि—

एतुमिच्छति—इति विग्रहे 'जिगमिषति' इति भवति । तद्धि इणधातोः

[illegible] 'सनि च' इति सूत्रे [illegible] गमेरादेशे 'सन्यङोः' इत्यनेन द्वित्वे अभ्यास-संज्ञायां [illegible] 'कुहोश्चुः' इति चुत्वे सन्नन्तस्य धातुसंज्ञायां लटि तिपि शपि 'आदेशप्रत्यययोः' इत्यनेन इटि षत्वे पररूपे 'जिगमिषति' इति।

उदकमिच्छति—इति विग्रहे 'उदकीयति' इति भवति। तद्धि 'सुप आत्मनः क्यच्' इत्यनेन क्यचि 'क्यचि च' इत्यनेन ईत्वे 'सनाद्यन्ता' इति धातुसंज्ञायां लटि तिपि शपि पररूपे 'उदेकीयति' इति।

भाण्डानि समाचिनोति—इति विग्रहे 'सम्भाण्डयते' इति भवति। तथाहि—समुपसर्गकभाण्डशब्दात् 'भाण्डात्समाचयने' इति वार्तिकेन णिङि धातु-संज्ञायां लटि ङित्वादात्मनेपदे तप्रत्यये एत्वे शपि गुणे अयादेशे पररूपे च सिद्धिः।

त्वामाचष्टे—इति विग्रहे—'त्वापयति' इति भवति। तथाहि—युष्मच्छब्दात् णौ 'प्रत्ययोत्तरपदयोश्च' इत्यनेन मपर्यन्तस्य त्वादेशे 'त्व अद् इ' इति स्थिते पर-रूपात् पूर्वं कृताऽकृतप्रसङ्गित्वेन नित्यत्वात् टिलोपे 'त्व इ' इति स्थिते वृद्धौ 'त्वा इ' इति जाते 'अर्ती'त्यनेन पुकि ण्यन्तस्य धातुसंज्ञायां लटि तिपि शपि गुणे अयादेशे पररूपे च 'त्वापयति' इति।

वस्तुतस्तु—'त्वादयति' इत्येव न्याय्यम्। तथाहि—'मपर्य्यन्तस्य' इत्य-धिकारात् 'प्रत्ययोत्तरपदयोश्च' इति सूत्रेण त्वादेशे अन्तरङ्गत्वात् पूर्वम् 'अतो गुणे' इति पररूपे ततः 'प्रकृत्यैका' इति टिलोपनिषेधे वृद्धौ च सत्यां तत्सि-द्धिः। नच 'प्रकृत्यैकाच्' इति सूत्रस्योदाहरणं वार्तिककारेण 'प्रेष्ठः-प्रेयान्' इति दत्तम्। तच्चोदाहरणं भाष्यकारेण टिलोपे कर्त्तव्ये 'असिद्धवदत्राभात्' इति सूत्रेण प्रादेशस्याऽसिद्धत्वात् प्रादेशेऽकारोच्चारणसामर्थ्याद्वेति हेतुद्वयेन साधितम्। एवञ्च—'प्रकृत्यैकाच्' इति सूत्रं भाष्ये प्रत्याख्यातमिति वाच्यम्? प्रेष्ठेत्यादिप्रयो-गोऽन्यथासिद्धो न तु 'प्रकृत्यैकाच्' इति सूत्रस्य मुख्योदाहरणमित्येव तद्भाष्या-शयात्। मुख्योदाहरणन्तु—'त्वादयति' 'मादयति' इत्यादि ज्ञेयम्। वार्तिककारो-क्तोदाहरणमन्यथासिद्धमिति भाष्यतात्पर्यम्। न तु तत्सूत्रमेव न कर्त्तव्यमिति तत्प्रत्याख्याने तात्पर्यमिति दिक्।

'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः'—इति वार्तिकेनैव सर्वत्र क्विप् सिद्धे 'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः' इति वार्तिकन्तु अनुबन्धा-सञ्जनार्थम्, अन्त्यवर्णस्य इत्संज्ञासिद्ध्यर्थमित्यर्थः। विस्तरस्तु अन्यत्र प्रति-पादितमिति।

४—उरस्यति—उरस् बलार्थः । तस्मात् 'कण्ड्वादिभ्यो यक्' इत्यनेन यकि धातुसंज्ञायां लटि तिपि शपि पररूपे 'उरस्यति' इति । बलवान् भवतीत्यर्थः ।

बोभूयिषयिषति—भूधातोर्यङि द्वित्वादिकार्ये 'गुणो यङ्लुकोः' इत्यनेन अभ्यासस्य गुणे 'बोभूय' इति यङन्तात् सनि सनः आर्धधातुकत्वात् इटि अतो लोपे षत्वे 'बोभूयिष' इति सन्नन्तात् हेतुमण्णिचि अतो लोपे बोभूयिषि इति ण्यन्तात् पुनः सनि इटि णिचो गुणाऽयादेशयोः षत्वे 'बोभूयिषयिष' इति स्थिते सन्नन्तस्य धातुसंज्ञायां लटि तिपि शपि पररूपे 'बोभूयिषयिषति' इति जातम् ।

धनुषि शिक्षते—अत्र 'शिक्षेर्जिज्ञासायाम्' इति वार्तिकेन आत्मनेपदं भवति । 'धनुषि शिक्षते' इत्यस्य धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः ।

सुस्मूर्षते——स्मृधातोः सनि द्वित्वादिकार्ये 'अज्झने'ति दीर्घे उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वे 'हलि च' इति दीर्घे 'सुस्मूर्ष' इति सन्नन्तात् 'ज्ञा-श्रु-स्मृ-दृशां सनः' इत्यनेन आत्मनेपदे लटि तप्रत्यये शपि पररूपे एत्वे 'सुस्मूर्षते' इति सिद्धम् ।

प्रावयति—'प्रु गतौ' अस्माण्णिचि वृद्धौ आवि प्रावीत्यस्य धातुसंज्ञायां लटि 'बुध युध-नश-जन-इङ्-प्रु-द्रु-स्रुभ्यो णेः' इत्यनेन परस्मैपदसंज्ञायां तिपि शपि गुणे अयादेशे पररूपे च कृते 'प्रावयति' इति । 'प्रावयति' इत्यस्य प्रापयतीत्यर्थः ।

अगीढ्वम्—अस्योत्तरं 'अगारीध्वम्' इत्यस्य साधुत्वावसरे ४१ वर्षे द्रष्टव्यम् ।

दासीष्ट—दाधातोर्लिङि सीयुडादिकार्ये सति 'स्य-सिच्-सीयुट्-तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इति सूत्रेण चिण्वदिट्पक्षे 'आतो युक् चिण्कृतोः' इत्यनेन युकि षत्वादिकार्ये 'दायिषीष्ट' इति । चिण्वदिडभावपक्षे युकोऽभावे 'दासीष्ट' इति भवति ।

अवाकीर्ष्ट—भूषणक्रियावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ चिण्वदिट् च नेति वाच्यमित्यर्थक—'भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्' इति वार्तिकेन निषेधादत्र चिण् न भवति, किन्तु 'लिङ्सिचोरात्मनेपदेषु' इति वेट् ।

उदपुपुच्छ—ण्यन्तस्य ग्रन्थेः ग्रन्थेः ब्रूञः आत्मनेवदविधावकर्मकस्य च यक्चिणोः प्रतिषेधो भारद्वाजीयाऽभिमते इत्यर्थक—'णिश्रन्थिग्रन्थि ब्रूञात्मनेपदाऽकर्मकाणामुपसंख्यानम्' इति वार्तिकेनाऽत्र चिण् निषेधो भवति ।

भवान् यजताम्—'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' इति सूत्रे पूर्वसूत्रोपात्तो लोट् चकारात्समुच्चीयते, ततश्च-कृत्यसंज्ञकः प्रत्यया वक्ष्यमाणाः, लोट् च प्रैषादिषु भवन्तीत्यर्थो भवति। तत्र लोडुदाहरणं-'भवान् यजताम्' इति।

५—णेरणाविति—अस्योत्तरं ४१ वर्षे द्रष्टव्यम्।

६—वाप्यम्—वप्धातोः 'आसु-यु-वपि-रपि-त्रपि-चमश्च' इति सूत्रेण ण्यत् प्रत्यये 'अत उपधायाः' इत्यनेन वृद्धौ कृदन्तत्वात् सौ तस्य अमादेशे 'वाप्यम्' इति जातम्।

पाठपटः—अस्योत्तरं ४३ वर्षे द्रष्टव्यम्।

विहङ्गः—विहायसा गच्छतीति विग्रहे 'गमेः सुपि वाच्यः' इति वार्तिकेन खच्चि प्रत्यये कृते 'विहायसो विह इति वाच्यम्' इति वार्तिकेन विह आदेशे 'अरुर्द्विषदजन्तस्य मुम्' इत्यनेन मुमि तस्यानुस्वारे परसवर्णे 'खच्च डिद्वा वाच्यः' इत्यनेन डित्संज्ञायां डित्वाट्टिलोपे कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'विहङ्गः' इति। डित्वाभावे तु-'विहङ्गमः' इति भवति।

जित्वरः—जिधातोः 'इण्-नश-जि-सर्तिभ्यः क्वरप्' इति सूत्रेण क्वरप्प्रत्यये कित्वात् गुणाभावे 'ह्रस्वस्य पिति कृति तुक्' इत्यनेन तुकि कृतन्तत्वात् सौ तस्य रुत्वे विसर्गे च 'जित्वरः' इति।

सूत्तम्—'सु' उपसर्गात् दाधातोः क्तप्रत्यये 'सु दा त' इति स्थिते 'अच उपसर्गात्तः' इति सूत्रेण दकारादाकारस्य तकारे दकारस्य 'खरि च' इति चर्त्वे 'दस्ति' इति सूत्रेण सूपसर्गस्य दीर्घे 'अतो लोपः' इत्यलोपे 'झरो झरि सवर्णे' इति तलोपे कृदन्तत्वात् सौ तस्य अमादेशे 'सूत्तम्' इति।

नच उपसर्गस्य दीर्घे कर्त्तव्ये चर्त्वस्यासिद्धत्वेन दादेशे तकाराद्युत्तरपदत्वाभावात् दीर्घो न स्यादिति वाच्यम्? 'अतो रोः' इति उत्वं प्रति रुत्ववत् चर्त्वस्य असिद्धत्वाभावात्। वस्तुतस्तु-गातिस्थेति सूत्रे भाष्ये सोस्तत्वे उपसर्गत्वप्रतिषेधात् "सूत्तम्" इति पदं चिन्त्यम् मूले "नीत्तम्" इत्युत्तरं "वीत्तम्" इत्येव पाठः समीचीनः इति तत्त्वविदः।

शुश्रुवान्—श्रुधातोः "भाषायां सदवसश्रुवः" इत्यनेन विभाषया लिटि तस्य क्वसुप्रत्यये द्वित्वादिकार्ये नुमि दीर्घे सलोपे कृदन्तत्वात् सौ तस्य हल्परत्वात् लोपे "शुश्रुवान्" इति।

वर्तिष्णुः—वृत्धातो "अलङ्कृञ्-निराकृञ्-प्रजन-उत्पच-उत्पत-उन्मद-

रुचि-अप-त्रप-वृधु-वृधु-सह-चर इष्णुच्" इति सूत्रेण इष्णुच् प्रत्यये गुणे कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे च कृते "वर्तिष्णुः इति सिद्धम्।

दन्दशूकः—ताच्छील्यार्थे दंशेर्यङि द्वित्वादिकार्ये कृते "यज-जप-दशां यङः" इति सूत्रेण ऊकि "यस्य हलः" इति यलोपे "अतो लोपः" इत्यल्लोपे च कृते "अनिदिताम्" इति नलोपे "जप-जभ-दह-दश-भञ्ज-पशाम्" इत्यनेन अभ्यासस्य नुकि कृदन्तत्वात् सौ रुत्वे विसर्गे "दन्दशूकः" इति।

व्याघ्रः—अस्योत्तरं ३१ वर्षे द्रष्टव्यम्।

७—वष्टि भोक्तुम्—इच्छार्थेषु एककर्तृकेषु उपपदेषु भुजधातोः "समानकर्तृकेषु तुमुन्" इति सूत्रेण तुमुन्प्रत्यये कुत्वे गुणे कृदन्तत्वात् सौ तस्य लोपे "वष्टि भोक्तुम्" इति।

'वश कान्तौ' तत्र कान्तिरिच्छेति वशधातुरपीच्छार्थको बोध्यः।

नीकाशः—अत्र "इकः काशे" इति सूत्रेण उपसर्गस्य दीर्घः।

अभिनिष्टानः—अत्र "अभिनिसः स्तनः शब्दसंज्ञायाम्", इति सूत्रेण स्तनेः सस्य मूर्धन्यादेशो भवति।

निक्कणः—अत्र "क्वणो वीणायाञ्च" इति सूत्रेण अप्प्रत्ययो भवति।

द्रुघनः—अत्र "करणेऽयोविद्रुषु" इति सूत्रेण अप् हनादेशश्च भवति।

गीर्णिः—अस्योत्तरं ३७ वर्षे द्रष्टव्यम्।

श्रद्धा—श्रदित्यव्ययपूर्वत्वेन उपसर्गपूर्वत्वाभावात् धाञः "आतश्चोपसर्गे" इति सूत्रेण अङोऽप्राप्तया "श्रदन्तरोरुपसर्गवद् वृत्तिः" इत्यनेन श्रच्छब्दस्य अङ्विधौ उसर्गत्वं भवति।

आढ्येन सुभूयते—"कर्तृकर्मणोश्च च्व्यर्थयोरिति वाच्यम्" इति वार्तिकस्य प्रत्युदाहरणमेतत्। तत्र च्व्यर्थयोः (अभूततद्भावे) इति किम् "आढ्येन सुभूयते" इत्यत्रापि खल् स्यात्।

पाणिनोपकर्षम्—अत्र "सप्तम्यां चोपपीडरुधकर्षः" इति सूत्रेण णमुल् भवति।

तिर्यक्कारं गतः—अत्र "तिर्यच्यपवर्गे" इति सूत्रेण णमुल् भवति। क्त्वापक्षे तु—"तिर्यक्कृत्य गतः" इति भवति।

८—'नोदात्तोपदेशस्य मान्तस्यानाचमेः—"मृजेर्वृद्धिः" इत्यतो वृद्धिरिति, "अत उपधायाः" इत्यतः उपधायाः इति, "अचो ञ्णिति" इत्यतः ञ्णि-

तीति, "आदो युक्" इत्यतः चिण्णकृतोरिति चानुवर्तते । ततश्च—"उदात्तोपदेश-स्य अनाचमेः मान्तस्य उपधाया वृद्धिर्न स्याच्चिणि ञिति णिति कृति च" इत्यर्थो भवति ; तेन—"अशमि"-अदमि" इत्यत्र शम्धातोर्दम्धातोश्च लुङि चिणि "अत उपधायाः" इति वृद्धिर्न भवति ।

अनुदात्तोपदेशाः सङ्गृहीताः ततोऽन्यः सर्वोऽपि धातुरुदात्तोपदेशः । 'उदा-त्तोपदेशस्य प्रत्युदाहरणम्—"अगामी"ति गमेरनुदात्तोपदेशत्वात् वृद्धिनिषेधो न । आङ्पूर्वश्चमिराचमिः तद्वर्जस्य-अनाचमेः । "अनाचमेः" इत्यस्य प्रत्युदाहरणम्-"आचामी"ति । अनाचमेरित्युक्तेरिह नोपधावृद्धिनिषेधः । 'मान्तस्य' प्रत्युदाह-रणम्—"अवादी"ति । वदधातोर्मान्तत्वाभावान्नोपधावृद्धिः ।

"क्रियासमभिहारे लोट् लोटो हिस्वौ, वा च तध्वमोः—"अस्यो-त्तरं ३६ वर्षे द्रष्टव्यम् ।

**तुन्दशोकयोः परिमृजापनुदोः**—आलस्यसुखाहरणयोः तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः स्यादित्यर्थः । "तुन्दम्" ( उदरम् ) परिमार्ष्टीति तुन्द-परिमृजोऽलसः" । शोकापनोदः ( सुखस्याहर्ता ) इत्याद्युदाहरणानि ।

**परिक्लिश्यमाने च**—सर्वतो विबाध्यमाने स्वाङ्गे द्वितीयान्तेर्णमुल् स्यादि-त्यर्थः । उरः प्रतिपेषं युध्यन्ते । उरोविदारं प्रतिचस्करे नखैः । इत्याद्युदाहरणानि ।

९—सन्नन्तात् गम्धातोः कर्मणि प्रत्यये—प्रथमपुरुषैकवचने "जिगंस्यते" इति रूपं भवति । 'अज्झने'ति दीर्घस्तु न गमेरनादेशत्वाभावात् ।

---

## णिजन्तादि-उत्तरकृदन्तान्तभागे प्रश्नाः ।

१९४५

१—औञ्जिजत् । प्रतीषिषति । उचिच्छिषति । जेघ्रीयते । भवर्वाः । ओजायते । औजिढत् । एषु पञ्च प्रयोगान् सप्रक्रियं साधु संसा-ध्य 'ऊर्णुनविषति' इत्यत्र कथमभ्यासे उकारः श्रूयत इति सप्रमाणं प्रतिपादयत ।

२—णिच्यच आदेशो न स्याद् द्वित्वे कर्त्तव्ये"इत्यादि, 'नन्वत्राङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ते'त्यादि 'यकारवकारान्तानां तूठ्भाविना यङ्लुक् नास्तीति छ्वोरिति सूत्रे भाष्ये ध्वनितम्' एतासु तिसृषु फक्किकासु कामप्येकां विशदमुपपादयत ।

३—अर्धितुमिच्छति । पुनः पुनरतिशयेन वा वर्तते ( यङ्लुकि ) । शपत्नीवाचरति । अमुयञ्चमाचष्टे । इति विग्रहेषु सिद्धानि रूपाणि सम्प्रदर्श्य—

"शैषिकान्मतुवर्थीयाच्छैषिको मतुबर्थिकः ।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते" ॥

इति कारिकां सोदाहरणं व्याख्यात ।

४—अजूयते । वारयियिषति । आहत । शिशासति । आथास्वयते । अस्तोषाताम् । अघानिषाताम् । अभञ्जि । कोपिषीष्ट । तत्तद्विशेषकार्यविधायकसूत्रनिर्देशपुरस्सरमेते प्रयोगाः साधनीयाः ।

५—"अनुपराभ्यां कृञः" इति सूत्रसार्थक्यं विशदं समर्थ्यताम् ।

अथवा

"इ चेति ह्रस्वः सुपठः" फक्किकेयं स्वरचितगद्येन व्याख्येया ।

६—नाऽहं कलिङ्गान् जगाम । नाकार्षम् । आशंसे क्षिप्रमधीयीय । आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति । अपि गिरिं शिरसा भिन्द्यात् । एषु यथारुचि त्रिष्वेव लकारविधायकसूत्राणि प्रदर्शयत ।

७—प्रेङ्खणीयम् । चर्त्यम् । उदेजयः । घटिन्धमः । भाष्यकृत् । द्यूनः । प्रस्तीमः । फणितम् । नदीष्णः । दद्विवान् । जिष्णुः । विदुरः । उपरि निर्दिष्टेषु केचन दश एव प्रयोगाः सविग्रहं साधु साधनीयाः ।

८—विसारः । अभिनिष्टानः । संशयः । उपजापः । जलधिः । निगमः । दुष्प्रमयः । अर्तित्वा । यष्टिग्राहं युध्यन्ते । एषु ससूत्रनिर्देशं विशेषकार्यं प्रदर्शनीयम् ।

९—"व्यक्तवाचां समुच्चारणे", "विभाषा चिण्णमुलोर्दीर्घोऽन्यतरस्याम्", "समुच्चये सामान्यवचनस्य", 'कर्मणि भृतौ', 'हलसूकरयोः पुवः', "करणेऽयोविद्रुषु" सोदाहरणनिर्देशमेषु केषाञ्चिच्चतुर्णामेवार्थो लेख्यः ।

## प्रश्नोत्तराणि ।

१—औब्जिजत्—'उब्ज आर्जवे' । अयं धातुः उपदेशे दकारोपधः । तस्य "भुजन्युब्जौ पाण्युपतापयोः" इति सूत्रेण निपातनात् बकारे कृते निष्पन्नात् 'उब्ज्' धातोर्णिचि ण्यन्तस्य "सनाद्यन्ताः" इत्यनेन धातुसंज्ञायां लुङि तिपि

अजादित्वाद्दाडागमे "आटश्चे"ति वृद्धौ 'औञ्ज् इ त्' इति स्थिते मध्ये चलौ तस्य "णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ्" इत्यनेन चङि "नन्द्राः संयोगादयः" इत्यनेन निषेधात् "चङि" इत्यनेन जिशब्दस्य द्वित्वे, नच साम्प्रतं संयोगादौ दकाराभावात् कथं "नन्द्राः" इत्यस्य प्रवृत्तिरिति वाच्यम् ? द्वित्वे कर्त्तव्ये अन्तरङ्गोऽपि नकारादेशः "नन्द्राः" इति निषेधे कृते प्रवर्त्तते दकारोच्चारणसामर्थ्यात्। एवञ्च "औञ्जि जि अ त्" इति स्थिते "णेरनिटि" इति णिलोपे 'औञ्जिजत्" इति सिद्धम् ।

**प्रतीषिषति**—बोधयितुमिच्छति इति विग्रहे प्रतिपूर्वात् इण्धातोः सनि सन्नन्तस्य "सनाद्यन्ताः" इत्यनेन धातुसंज्ञायां लटि तिपि शपि 'प्रति इ स अ ति' इति स्थिते 'अजादेर्द्वितीयस्य' इत्यनेन सनो द्वित्वे अभ्यासस्य इत्वे प्रतिना सवर्णदीर्घे सकारद्वयस्य प्रत्ययावयवत्वात् षत्वे "अतो गुणे" इति पररूपे "प्रतीषिषति" इति सिद्धम् ।

"सनि च" इत्यनेन गम्यादेशस्तु न, तत्र सूत्रे "णौ गमिरबोधने" इत्यतः 'गमिरबोधने' इत्यनुवर्त्तनात् । एवञ्च गन्तुमिच्छति इति विग्रहे एव गम्यादेशे "जिगमिषति" इति भवति ।

**उच्चिच्छिषति**—"उच्छी विवासे" अत्र "छे च" इति तुकि कृते श्चुत्वेन "उच्छ्" इति निष्पन्नं भवति । तस्मात् सनि सन्नन्तस्य "सनाद्यन्ताः" इत्यनेन धातुसंज्ञायां लटि तिपि शपि सनः इटि 'उच्छ् इ स अ ति' इति स्थिते "पूर्वत्रासिद्धीयमद्वित्वे" इति निषेधात् द्वित्वे कर्त्तव्ये श्चुत्वस्य निषेधाभावेन 'च्छिस्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषेण छकारसकारयोर्निवृत्तौ 'उचिच्छिस अ ति' इति स्थिते सकारस्य प्रत्ययावयवत्वात् षत्वे पररूपे "उचिच्छिषति" इति सिद्धम् ।

नच "निमित्तापाये नैमित्तिकस्याप्यपायः" इति न्यायात् निमित्तकस्य छस्य हलादिशेषेणाऽपाये सति नैमित्तिकस्य तुकोऽपि निवृत्तेस्ततश्च तदादेशचकारस्य कथमभ्यासे श्रवणमिति वाच्यम् ? 'च्छ्वो'रिति सूत्रस्थ सतुग्ग्रहणेन तस्याऽनित्यत्वात् । अन्यथा 'पृष्टः' 'पृष्टवान्' इत्यत्र "च्छ्वो"रिति सूत्रेण छकारस्य शकारे सति निमित्ताऽभावादेव तुकोऽपि निवृत्तिसिद्धौ सतुग्ग्रहणं व्यर्थं स्यात् । किञ्च—पुष्ययोगं जानाति—'पुष्येण योजयति' इत्येतत्साधके 'पुष्ययोगे णी' इति वचने भाष्यकृत्कृतप्रत्ययापत्त्यनुवृत्तिर्वा उक्तपरिभाषायाः अनित्यत्वे ज्ञापकं

बोध्यम्। अन्यथा कुत्लुकि निमित्तापायपरिभाषयैव कुत्वनिवृत्तौ सिद्धायां किं तदनुवृत्त्येति दिक्।

**ऊर्णूनीयते**—अस्योत्तरं ४० वर्षे द्रष्टव्यम्।

**अवर्वाः**—वृत्धातोः यङ्लुकि धातुसंज्ञायां लङि सिपि द्वित्वादिकार्ये कृते 'अवर्वत् स्' इति स्थिते जश्त्वे "दश्च" इत्यनेन दकारस्य रुत्वे "रो रि" इत्यनेन पूर्वरेफस्य लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इत्यनेन दीर्घे हल्ङ्याब्भ्यादिना सिपः सस्य लोपे पदान्तरेफस्य विसर्गे 'अवर्वाः' इति जातम्।

**ओजायते**—अस्योत्तरं ३९ वर्षे द्रष्टव्यम्।

**औजिढत्**— ,, ४२ ,, ,,

**ऊर्णुनविषति**—,, ४७ ,, ,,

**२—णिच्यच आदेशो नेति**—"ओः पुयण्ज्यपरे" इति सूत्रस्थ-पिपावयिषति, विभावयिषति, यियावयिषति, रिरावयिषति, लिलावयिषति, जिजावयिषति, इत्युदाहरणेषु द्वित्वप्रत्ययनिमित्ते णिचि "द्विर्वचनेचि" इति निषेधाप्रवृत्त्या द्वित्वात् प्रागेव परत्वात् वृद्ध्यावादेशयोः कृतयोरभ्यासेऽवाकारस्य ह्रस्वे सति "सन्यतः" इत्येवेत्वसिद्धेः पवर्गयण्प्रत्याहारजकारग्रहणं व्यर्थम्। ओः पययोरपरयोरित्येव सूत्रमस्तु। पिपावयिषति, यियावयिषति, इत्यत्रोक्तरीत्या "सन्यतः" इतीत्वसिद्धावपि पिपविषति, यियविषति, इत्यत्र पूङ्धातोर्युधातोश्चाण्यन्तत्वात्, सनि अभ्यासे इत्वार्थं तदावश्यकत्वात्। वर्गप्रत्याहारजग्रहणन्तु व्यर्थमेव। पवञ्च तदुक्तार्थे ज्ञापकम्—'णिच्यच आदेशो न स्यात् द्वित्वे कर्त्तव्ये' इति, ज्ञापितेऽस्मिन्नर्थे बिभावयिषतीत्यादिषु णिचि लुप्ते सति 'चङि' इति द्वित्वे 'प्रत्ययलक्षणमाश्रित्य णिचं गुणावादेशयोः प्रतिषेधे सति उवर्णान्तानां द्वित्वेऽभ्यासेऽकाराभावेन 'सन्यतः' इत्यस्याप्रवृत्त्या वर्गप्रत्याहारजकारग्रहणं स्वांशे चरितार्थम्। ज्ञापनफलन्तु–तुतावयिषति, अतूतवत्, ऊर्णुनावयिषति, और्णूनवत्, पुस्फारयिषति, अपुस्फरदिति।

**नन्वत्र अङ्गसंज्ञेति**—अयमभावः, कंसवधशब्दात् णिचि कृते कंसवधशब्दस्य अङ्गसंज्ञा धातुसंज्ञा च भवति, ततः कंसवधशब्दात्पूर्वमडागमः, कंसशब्दस्य द्वित्वञ्च भवितुमर्हति। किञ्च 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति परिभाषया कुत्वतत्वे न भवतस्तन्न, प्रकृतिवच्चेति चकारो भिन्नक्रमः कारकं चात्कार्यम्, हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं कारकं धातावनन्तर्भूतं

द्वितीयान्तं [illegible] आर्यं कुत्वतत्वादि तदिहापीत्यर्थात्। अत्र 'हनश्च वधः' इति अपु [illegible] वधादेशश्चेति दिक् ।

[illegible]वकारान्तानामिति—'च्छ्वोः शूठ्' इति सूत्रे भाष्ये किद्ग्रहण-मनुवर्तते न वेति विचारे कांश्चिद्दोषानुद्भाव्य परिहृत्य चोक्तम् । एतावानेव विशेषः । अनुवर्तमाने किद्ग्रहणे छ्वः षत्वं वक्तव्यम् । अननुवर्तमाने त्वनेन छ्वः शत्वे कृते शान्तत्वादेव षो भविष्यतीति प्रष्टा प्रष्टुमित्यादि सिद्धये 'व्रश्चादि' सूत्रे छ्ग्रहणं न कर्त्तव्यम् । एवं हि वदता भाष्यकृता ऊठ्भाविभ्यो यङ्लुक् नास्ती-त्युक्तप्रायम् । अन्यथा दिवेर्यङ्लुकि ईडभावपक्षे देदेति, देदिवि इत्यादौ ऊठो भावाभावाभ्यां महान् विशेषः स्यात् । तत्र किद्ग्रहणाननुवृत्तावूठः प्रवृत्त्या देद्योति देद्योषीत्यादिरूपविशेषलाभात्, परन्त्विदं 'च्छ्वोः शूठ्' इत्यनेन यत्रोठ् प्रवर्तते तत्रैव प्रवर्तते । तज्ज्ञापनस्योक्तसूत्रस्य भाष्यमूलकत्वात् 'ज्वरत्वर' इत्यादिसूत्रेण यत्रोठ् भवति, तत्र यङ्लुग् भवत्येवेति युक्तं माधवादीनां मतश्चेति ।

३—अर्धितुमिच्छति—इति विग्रहे ऋधेः सनि इडभावे ऋकारस्य ईत्वे रपरत्वे ईर्ध् स इति स्थिते धस्य चर्त्वे 'नन्द्राः' इति रेफं वर्जयित्वा 'अजादेर्द्वि-तीयस्य' इत्यनेन 'त्स' इत्यस्य द्वित्वे अभ्यासस्य लोपे 'ईर्त्सति' इति । इट्पक्षे तु—सनः सादित्वाभावादीत्वाभावे गुणे रपरत्वे 'अर्ध् इ स' इति स्थिते धिस इत्यस्य द्वित्वादिकार्यें कृते 'अर्दिधिषति' इत्यपि भवति ।

पुनः पुनरतिशयेन वा वर्तते—इति विग्रहे 'वृतु वर्तने' अस्मात् यङ्लु-गन्तात् ववृत् इत्यस्मात् लटि तिपि ईट्पक्षे अभ्यासस्य क्रमेण—रुक्, रिक्, रीक् च भवति । ततश्च ईट्पक्षे—वर्वृतीति, वरिवृतीति, वरीवृतीति, च भवति । एवमीडभावे—वर्वर्ति, वरिवर्ति, वरीवर्ति इत्यपि भवति ।

सपत्नीवाचरति इति विग्रहे-साधनप्रकारस्तु ४१ वर्षे द्रष्टव्यः ।

अमुमाचष्टे—इति विग्रहे 'अदस् अच् इ' इति स्थिते टेरद्र्यादेशे अच् इत्यस्य टेर्लोपे 'अदद्रि इ' इति स्थिते 'अदसोऽद्रेः पृथङ् मुत्वम्' इति मते दकाराकारयोर्दकाररेफयोश्च मत्वोत्वयोः कृतयोः 'अमुमुइ इ' इति स्थिते प्रथमस्य इकारस्य णिचि परे वृद्धौ आयादेशे अमुमुआयीति ण्यन्तात्लटि तिपि शपि पररूपे गुणेऽयादेशे-'अमुमुआययति' इति मुत्वस्याऽसिद्धत्वान्न यण् ।

शैषिकान्मतुबर्थीयेति—शेषाधिकारे विहितः शैषिकः । भवार्थे अध्या-त्मादित्वात् ठञ् । शैषिकात्=शेषाधिकारभवप्रत्ययान्तात्, शैषिकः सरूपः प्रत्ययो

न भवति। तेन शालायां भवः शालीयः 'वृद्धाच्छः'। तदन्तात् शालीये भवः इति वाक्यार्थे स छ एव न भवति किन्तु वाक्यमेव। विरूपस्तु भवत्येव। अहिच्छत्रे भवः आहिच्छत्रः। भवार्थेऽण्। तदन्तादाहिच्छत्रे भवः इति वाक्यार्थे वृद्धाच्छो भवति। आहिच्छत्रीयः। एवं मतुबर्थीयात् सरूपो मतुबर्थकः प्रत्ययो न। धनवानस्यास्तीति मतुबन्तान्मतुब्न। विरूपस्तु स्यादेव, दण्डिमती शाला। इह मतुबन्तात् इनि प्रत्ययो भवत्येव। सन्नन्तात्सन्नेष्यते। अर्थद्वारा च साहश्यम्। तेनेच्छासन्नन्तात्सन्न। स्वार्थसन्तन्तात्तु स्यादेव। जुगुप्सिषते। मीमांसिषते। इति।

४—असूयते—'असु उपतापे' इति कण्ड्वादौ वर्तते। तत्र 'अस् असूञ्' इत्येके पठन्ति, तन्मते असूञ्धातोः 'कण्ड्वादिभ्यो यक्' इत्यनेन यकि 'असूयते' इति भवति।

वार्यियिषति—अस्योत्तरं ४१ वर्षे द्रष्टव्यम्।

आहृत—अस्योत्तरं ४१ वष द्रष्टव्यम्।

शिशत्सति—ननु 'शदेः शितः' इत्यनेन 'शिशत्सति' इत्यत्र आत्मनेपदं कुतो नेति चेन्न, 'शदेः शितः' इत्यत्र 'पूर्ववत्सनः' इति, 'नानोर्ज्ञः' इत्यत्र नेति चानुवर्त्य—सन्नन्तात् शदेः नात्मनेपदमिति व्याख्यानेनाऽदोषात्।

नच शिद्भाविनः शदेरात्मनेपदं स्यादित्यर्थे 'शीयते' इत्यत्र आत्मनेपदं भवति, प्रस्तुतव्याख्याने तु प्रकृतवत् तत्राप्यात्मनेपदं न स्यादिति वाच्यम्? 'शदेः शितः'—'सनो न' इति वाक्यभेदेनाऽदोषात्। एवञ्च—शिद्भाविनो शदेरात्मनेपदं स्यादिति पूर्ववाक्यस्यार्थस्वीकारे 'शीयते' इत्यत्र नाव्याप्तिः। तथा च—शदेः सन्नन्तान्नात्मनेपदमित्यपरवाक्यस्यार्थस्वीकारे 'शिशत्सति' इत्यत्रातिव्याप्तिश्च न।

'शदेरित्यादिसूत्रद्वये' इति मूलोक्ते तु आदिपदेन 'म्रियतेर्लुङ्लिङोश्च' इत्यस्य ग्रहणं बोध्यम्।

आयासयते—अत्र 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः' इति सूत्रेण परस्मैपदनिषेधो भवति।

अस्तोषाताम्—इदञ्च "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" इति सूत्रेण चिण्वद्भावसन्नियोगशिष्टविहित इडभावपक्षे रूपम्।

अघानिषाताम्—इदन्तु चिण्वदिटि पक्षे "हो हन्तेः" इति कुत्वेन ज्ञेयम्। चिण्वदिडभावपक्षे तु—"हनः सिच्" इत्यनेन कित्वात् "अनुदात्तोपदेश" इत्यनेनाऽनुनासिकलोपे "अहसाताम्" इति। वधादेशपक्षे तु—"अवधिषाताम्" इति बोध्यम्।

अभञ्जि—"भञ्जेश्च चिणि" इत्यनेन नलोपे उपधावृद्धौ "अभाजि" इति। नलोपाभावे "अभञ्जि" इति।

कोषिषीष्ट—अत्र आर्धधातुकत्वेन यगविषयत्वात् "कुषि रञ्जोः प्राचां श्यन् परस्मैपदं च" इत्यनेन श्यन्न भवति। परस्मैपदं कुतो न भवतीति न शङ्क्यम्; परस्मैपदस्य श्यन्सन्नियोगशिष्टत्वेन विहितत्वात्।

५—"अनुपराभ्याम्" इति—"अनुपराभ्यां कृञः" इत्यत्र भावे कर्मणि लकारस्य कर्तृगे फले परस्मैपदनिवृत्त्यर्थं कर्तरीत्यस्यानुवृत्तिरिति तत्त्वम्। ननु कर्तरीत्यस्यानुवृत्तावपि अनुक्रियते शब्दः स्वयमेवेत्यत्र कर्मकर्तरि परस्मैपदं दुर्वारमिति चेन्न, कर्मकर्तरि "कर्मवत्कर्मणा तुल्यक्रियः" इत्यात्मनेपदेन परेणास्य बाधात्। ननु कर्मणि यच्छास्त्रं तत् 'कर्मवत्' इत्यनेन कर्मकर्तर्यतिदिश्यते। तथा चात्र कर्मकर्तरि भावकर्मणोरित्यात्मनेपदशास्त्रमिहाप्यतिदिश्यते तस्य च परत्वाभावात् कथमस्य बाधः स्यादिति चेन्न, शास्त्रातिदेशस्य कार्यसम्पत्तिरूपफलकत्वात् कार्यातिदेशस्य मुख्यतया तस्यैवेहाश्रयणात्। एवञ्च प्रकृते आत्मनेपदविधायकं "कर्मवत्कर्मणा" इत्येव। तच्च "अनुपराभ्याम्" इत्यतः परमिति कर्मकर्तरि नास्य प्रवृत्तिः। यदा शास्त्रातिदेशपक्ष एवाश्रीयते, तदा "अनुपराभ्यां कृञः" इत्यत्र "कर्तरि कर्मव्यतिहारे" इत्यस्मादेकं कर्तृग्रहणमनुवर्तते, तथा "शेषात् कर्तरि परस्मैपदम्" इत्यतो द्वितीयं कर्तृग्रहणमनुवर्तते। तथा च—स्वभावत एव यः कर्ता नतु विवक्षाधीनः कर्मकर्ता तथाविधकर्तर्येव "अनुपराभ्यां कृञः" परस्मैपदमिति लभ्यते। एवञ्च कर्मकर्तरि नास्य प्रवृत्तिरिति दिक्।

"इ चेति ह्रस्वः सुपठः"—अयम्भावः खनधातोः क्यपि नकारस्य ह्रस्वेकारे आद्गुणे च "खेयम्" इति रूपसिद्धिर्निर्बाधा। दीर्घस्य ह्रस्वस्य वा आद्गुणे विशेषाभावात्, अतस्तत्सूत्रे ह्रस्व एवेकारो विधेयो न तु दीर्घः, ह्रस्वविधाने मात्रालाघवात् इति। ननु इचेति ह्रस्वादेशाभ्युपगमे तस्यादेशस्य पूर्वेण सह आद्गुणे तस्यासिद्धतया 'ह्रस्वस्य पिति' इति तुक् स्यात्। 'षत्वतुकोरसिद्धः' इति षत्वे तुकि च कर्तव्ये एकादेशशास्त्रस्यासिद्धत्वस्वीकारात् इति चेद्? न, तुग्विधौ पदा-

न्वपदाद्योरादेशोऽसिद्धो न त्वयोऽपीति सिद्धान्तात्।

६—**नाहं कलिङ्गान् जगाम**—अस्योत्तरं ४१ वर्षे द्रष्टव्यम्।

**नाकार्षम्**—अकार्षीः किम्? इति प्रश्ने—'न करोमि' 'नाऽकार्षम्'। अहं नु करोमि, 'अहं न्वकार्षम्' इत्युत्तरम् 'अत्र 'नन्वोर्विभाषा' इति सूत्रेण विभाषया लङ् भवति।

**आशंसे क्षिप्रमधीयीय**—अत्र 'आशंसावचने लिङ्' इत्यनेन लिङ् भवति।

**आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति**—अत्र 'शेषे लृडयदौ' इत्यनेन लृङ् भवति।

**अपि गिरिं शिरसा भिन्द्यात्**—अत्र 'सम्भावनेऽलमिति चेत्सिद्धाऽप्रयोगे' इति सूत्रेण लिङ् भवति।

७—**प्रेङ्खणीयम्**—अस्योत्तरं ४२ वर्षे द्रष्टव्यम्।

**चर्त्यम्**—चर्तुं योग्यमिति विग्रहे 'ऋहलोर्ण्यत्' इत्यनेन ण्यत्प्रत्यये गुणे कृदन्तत्वात् सौ तस्या मादेशे 'चर्त्यम्' इति। क्यप् तु न, 'ऋदुपधाच्चाऽक्लृपि-चृतेः' इत्यत्र 'अक्लृपिचृतेः' इत्युक्तत्वात्।

**उदेजयः**—उदेजयतीति 'उदेजयः'। उत्पूर्वादेजधातोर्ण्यन्तात् 'अनुपसर्गा-ल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च' इति सूत्रेण शप्रत्यये शपि गुणे-ऽयादेशे च कृते कृदन्तत्वात् सौ रुत्वे विसर्गे 'उदेजयः' इति।

**घटिन्धमः**—अस्योत्तरं ३७ वर्षे द्रष्टव्यम्।

**शास्त्रकृत्**—अस्योत्तरं ४१ वर्षे 'मन्त्रकृत्' इत्यस्य साधुत्वे प्रदर्शितम्।

**द्यूनः**—दीव्यतीति 'द्यूनः'। अत्र दिव्धातोः निष्ठायां क्तप्रत्यये 'दिवोऽविजिगी-षायाम्' इत्यनेन निष्ठातस्य नत्वे 'च्छ्वोः शूडि'ति वस्य ऊठि यणि कृदन्तत्वात् सौ रुत्वे विसर्गे 'द्यूनः' इति।

**प्रस्तीमः**—प्रपूर्वात् कृताऽत्वात् स्त्याधातोः निष्ठायां क्तप्रत्यये 'स्त्यः प्रपूर्वस्य' इत्यनेन सम्प्रसारणे पूर्वरूपे च कृते 'हलः' इत्यनेन दीर्घे 'प्रस्तीत' इति स्थिते 'प्रस्तोऽन्यतरस्याम्' इत्यनेन निष्ठातकारस्य मकारे कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'प्रस्तीमः' इति मत्वाभावे 'प्रस्तीतः' इति।

**फणितम्**—'क्षुब्ध-स्वान्त-ध्वान्त-लग्न-म्लिष्ट-विरिब्ध-फाण्ट-बाढानि मन्थ-मनस्-तमः-सक्ता-ऽविस्पष्ट-स्वरा-ऽनायास-भृशेषु' इति सूत्रेण अनायासे अर्थे निपातनात् फणेः क्तः, इडभावः, निष्ठातस्य टत्वं च भवति। ततश्च तस्याऽ-

सिद्धत्वात् 'अनुनासिकस्य' इति दीर्घे सति 'फाण्टम्' इति निष्पद्यते। अनायास भिन्नेऽर्थे तु—निष्ठायां क्तप्रत्यये इटि सति 'फणितम्' इति बोध्यम्।

नदीष्णः—नद्यां कुशलं स्नातीति 'नदीष्णः'। अत्र 'निनदीभ्यां स्नातेः कौशले' इति सूत्रेण 'स्नातेः' सस्य षत्वमिति विशेषः।

**दद्विान्**—'डु दाञ् दाने' अस्माल्लिटि तत्स्थाने क्वसुप्रत्यये कृते द्वित्वादि-कार्ये 'वस्वेकाजाद्घसाम्' इत्यनेन इटि 'आतो लोप इटि च' इत्यालोपे नुमि 'अत्व-सन्तस्य' इति दीर्घे संयोगान्तलोपे कृदन्तत्वात् सौ तस्य हल्ङ्यादिलोपे 'ददिवान्' इति सिद्धम्।

**जिष्णुः**—'ग्लाजिस्थश्च ग्स्नुः' इति सूत्रेण ग्स्नुः प्रत्यये सति 'जिष्णुः' इति भवति।

**विदुरः**—'विदिभिदिच्छिदेः कुरच्' इति सूत्रेण कुरच्प्रत्यये सति 'विदुरः' इति भवति।

**८—विसारः**—अस्योत्तरं ४१ वर्षे द्रष्टव्यम्।

**अभिनिष्टानः**—अत्र 'अभिनिसः स्तनः शब्दसंज्ञायाम्' इति सूत्रेण स्तनेः सस्य मूर्धन्यादेशो भवति।

**संशयः**—'व्युपयोः शेते पर्याये' इति सूत्रस्थ-'पर्याये' इत्यस्य प्रत्युदाह-रणमेतत्।

**उपजापः**—'व्यधजपोरनुपसर्गे' इति सूत्रस्य 'अनुपसर्गे' इत्यस्य प्रत्युदाह-रणमेतत्।

**जलधिः**—अत्र 'कर्मण्यधिकरणे च' इति सूत्रेण अधिकरणेऽर्थे किप्रत्ययो भवति।

**निगमः**—निर्गच्छन्त्यनेनेति निगमः-छन्दः। अत्र 'गोचर-संचर-वह-व्रज-व्यजाऽऽपण-निगमाश्च' इति सूत्रेण निपातनात् 'निगमः' इति सिद्धं भवति।

**दुष्प्रमयः**—अत्र 'ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्' इति सूत्रेण खलि कृते 'निमिमीलीयां खलचोरात्वं नेति वाच्यम्' इति वार्तिकेन आत्वाभावो भवति।

**अर्चित्वा**—'वञ्चिलुञ्च्यृतश्च' इत्यनेन किद्विकल्पपक्षे रूपमिदम्।

**यष्टिग्राहं युध्यन्ते**—अत्र 'द्वितीयायाञ्च' इति वार्तिकेन णमुल्प्रत्ययो भवति।

**९—'व्यक्तवाचामिति**—मनुष्यादीनां सम्भूयोच्चारणे वदेरात्मनेपदं स्यादि-त्यर्थः। तेन 'सम्प्रवदन्ते, ब्राह्मणाः' इत्यत्राऽऽत्मनेपदं सिद्धं भवति।

चिण्णमुलोरिति—चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यादित्यर्थः। 'शामिता—शमिता' इत्युदाहरणम्।

**'प्रकृतो मितां ह्रस्व एव तु न विकल्पः' इति पङ्क्त्याख्यानमपि यत्र प्रष्टुराशयः तत्र इत्थं समाधानं देयम्—**

ननु 'चिण्णमुलोः' इति सूत्रे दीर्घग्रहणं व्यर्थम्। चिण्णमुलोरन्यतरस्याम्' इत्येतावतैव 'मितां ह्रस्वः' इति पूर्वसूत्रादनुवृत्तस्य ह्रस्वस्यैव विकल्पे दीर्घविकल्पासिद्धेरिति चेन्न, शमधातोर्ण्यन्तात्णौ पूर्वं णेर्लो लुटि तासि ण्यन्तस्याजादित्वाच्चिण्वदिटं तस्याभीयत्वेनासिद्धतया अनिटीति निषेधाभावाण्णिलोपे दीर्घविकल्पे सति 'शमिता—शामिता' इति रूपद्वयमिष्यते। ह्रस्वविकल्पविधाने तु ह्रस्वविकल्पो न स्यात् प्रथमणिलोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन व्यवहिततया चिण्परकत्वाभावात्। दीर्घविकल्पविधौ तु प्रथमस्य णिलोपो न स्थानिवत् दीर्घविधौ स्थानिवत्त्वनिषेधात्। भाष्यकारस्तु—'न पदान्त' इति सूत्रे 'पूर्वत्रासिद्धे न स्थानिवत्' इत्येव सिद्धत्वात् तत्र द्विर्वचनसवर्णानुस्वारदीर्घजश्चरविधीन् प्रत्याख्यातवान्। नच ण्यन्तात्णौ 'चिण्णमुलोः' इति दीर्घे कर्त्तव्ये प्रथमणिलोपस्य स्थानिवत्त्वं दुर्वारम्, 'चिण्णमुलोः' इति दीर्घस्य पूर्वत्रासिद्धीयत्वाभावात्। ततश्च प्रथमणिचा व्यवहितत्वात् दीर्घानापत्तिः। एवञ्च तत्र दीर्घे कर्त्तव्ये स्थानिवत्त्वनिवारणाय दीर्घग्रहणस्यावश्यकत्वात् कथं दीर्घग्रहणस्य प्रत्याख्यानमिति चेन्न, 'चिण्णमुलोः' इति दीर्घविधौ णाविति णित्वजातिप्रधानो निर्देशः। चिण्णमुल्परकणित्वजातौ परत इति यावत्। णित्वजातिश्च णिद्वयेऽस्तीति प्रथमणेः स्थानिवत्त्वेऽपि दीर्घस्य निर्बाधत्वात्। एवञ्च ह्रस्वदीर्घयोर्विशेषाभावात् ह्रस्वविकल्प एव क्रियतां मास्तु दीर्घग्रहणमिति भाष्याशयः।

**समुच्चये सामान्यवचनस्येति**—अस्योत्तरं १८ वर्षे द्रष्टव्यम्।

---

## णिजन्तादि-उत्तरकृदन्तान्तभागे प्रश्नाः।

### १९४६

१—प्राणिणत्। पषिषिषति। ओष्सति। यंयस्यते। अजक्रमीत्। अजर्घाः। औडिढत्। एषु पञ्च प्रयोगान् सम्यक् साधयत।

२—'भुसुवोः इति गुणनिषेधो भाषायां न' इत्यादि। 'इह रिस् शब्दस्य द्वित्वम्' इत्यादि। एवञ्च अवागल्भत, अवागल्भिष्टेत्यादावप्यवे-

त्यस्य पृथक् करणं बोध्यम्, इत्यादि-एतासु कमप्येकां कारिकां समीचीनमुपवर्णयत ।

३—कर्तुमिच्छति । पुनः पुनरतिशयेन वा कृन्तति (यङ्लुकि), विद्वांसमाचष्टे । सेनयाभियाति । इति विग्रहेषु सिद्धान् प्रयोगान् सन्दर्श्य 'ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्' इति वार्तिकार्थं विवदमानमतं सोदहरणं प्रतिपादयत ।

४—मेधायति । अशिश्वीयिषति । निविशते । प्रकुरुते । वाष्पमुच्चरति । देवदत्तं प्रति शुश्रूषते । जनयति सुखम् । अविकीर्षिष्ट । उपारोधि । व्यकारिष्ट । तद्विशेषकार्योपपादकसूत्रनिर्देशपुरस्सरमेषां साधनप्रणाली प्रदर्शनीया ।

५—सुप्तोऽहं किल विललाप । स्म पिता ब्रवीति । शीघ्रं वत्स्यामः । अलं कृष्णो हस्तिनं हनिष्यति । भुञ्जीयेतीच्छति । वसन् ददर्श । एषु लकारसम्पादकानि शास्त्राणि निर्देष्टव्यानि ।

६—चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति सूत्रे ह्रस्वानुवृत्त्यैव विकल्पसिद्धौ दीर्घग्रहणमावश्यकमनावश्यकं वेति विचार्यताम् ।

अथवा

धातोरित्यस्यातृतीयाध्यायसमाप्तेरधिकाराभावे किं दूषणमिति समाधीयताम् ।

७—प्रयाणीयम् । प्रेन्वनम् । भृत्याः । प्रणाय्यः । अरविन्दम् । इरम्मदः । दार्वाघाटः । सोमसुत् । विरेभितम् । धीतम् । उपेयिवान् । अर्हन् । अञ्जरः । तृष्णक् । एषु केचन दश प्रयोगाः साधनीयाः ।

८—काण्डलावः । निगारः । पुण्यप्रचयः । उन्मादः । जागर्या । धूत्वा । वितत्य । भाक्षनिकवकः । कथङ्कारम् । गोपोषम् । एषु विशेषसूत्राणि प्रदर्शयत ।

९—उणादीनामपाणिनीयत्वेऽपि तत्साधुत्वापादकं प्रमाणं स्वाधीतग्रन्थे किं भवतोपलब्धमिति निर्णीय भावार्थकलकारे द्वित्वाद्यप्रतीतौ हेतुर्वाच्यः ।

## प्रश्नोत्तराणि ।

१—प्राणिणत्—अस्योत्तरं ४२ वर्षे द्रष्टव्यम् ।

**एषिषिषति**—'रलो व्युपधाद्धलादेः संश्च' इति सूत्रस्य प्रत्युदाहरणमेतत् । तत्र हि हलादेरित्यस्याभावे इष्धातोः सनि इटि 'इष् इ स' इति स्थिते 'रलो व्युपधादि'ति कित्वेन गुणनिषेधात् 'एषिषिषति' इति रूपं न स्यात् । तद्ग्रहणे कृते तु इषधातोः सनि इटि हलादित्वाऽभावेन कित्वाऽभात् गुणे 'अजादेर्द्वितीयस्ये' ति 'षि' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे सनः सकारस्य षत्वे लटि तिपि शपि पररूपे 'एषिषिषति' इति सिद्धम् । नचाऽत्र नित्यत्वात् पूर्वं द्वित्वं कुतो नेति वाच्यम्, ओणृधातौ ऋकारोच्चारणेन 'उपधाकार्यं हि द्वित्वात् प्रबलम्' इति सामान्यतो बाधितत्वात् ।

**ज्ञीप्सति**—'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' इति सूत्रे ज्ञपिः पुगन्तो मित्संज्ञकः, पकारान्तश्चौरादिकश्च । तत्र घटादिस्थात् मारणतोषणनिशामनार्थात् ज्ञाधातोः हेतुमण्णिचि पुकि घटादित्वेन मित्वादुपधाह्रस्वे 'ज्ञपि' इति, तस्मादथवा 'ज्ञप मिच्चे' ति यः स्वतः पठितश्चुराचौ, तस्माण्णिचि उभयविधाज्ज्ञपि ण्यन्ताज्ज्ञपिधातोः सनि 'सनीवन्तर्धे'ति इडभावपक्षे णेः परस्य सनः 'इको झल्' इति कित्वात्तस्मिन्परे णेर्गुणाभावे 'ज्ञपि इ स' इति स्थिते 'अज्झनगमां सनि' इत्यनेन प्राप्तदीर्घं परत्वाद्बाधित्वा 'णेरनिटि' इत्यनेन णिलोपे 'आपज्ञप्यृधामीत्' इत्यनेन ईत्वे 'ज्ञीप्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'अत्र लोपोऽभ्यासस्य' इत्यने अभ्यासलोपे' लटि तिपि शपि पररूपे 'ज्ञीप्सति' इति । इट्पक्षे तु—'जिज्ञपयिषति' इति बोध्यम् ।

**यंयम्यते**—यम्धातोर्यङि द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'नुगतोऽनुनासिकान्तस्य' इति नुकि तस्यानुस्वारे यङन्तस्य धातुत्वाल्लटि ङित्वादात्मनेपदे तप्रत्यये एत्वे शपि पररूपे 'यंयम्यते' इति । ननु नुकोऽनुस्वारस्य अपदान्तत्वादझल्परकत्वाच्चेति कथं तस्य 'नश्च' इत्यनुस्वार इति चेन्न, नुकानुस्वारो लक्ष्यते इत्युक्तत्वात् ।

**अजङ्गमीत्**—गम्धातोर्यङि तस्य लुकि लुङि तिपि ईटि द्वित्वादिकार्ये 'नुगतोऽनुनासिकान्तस्य' इति नुकि 'नश्च' इत्यनुस्वारे तस्य परसवर्णे च कृते मध्ये च्लौ तस्य सिचि 'घुषाघुतायूलतः परस्मैपदेषु' इत्यनेन च्लेरङादेशस्तु न, अनुबन्धनिर्देशात् । ततः 'आर्धधातुस्य वलादेः' इत्यनेन तस्य इटि तस्मात्परस्य सिचो लोपे सवर्णदीर्घे 'अजङ्गमीत्' इति । वृद्धिस्तु न, 'ह्यन्ते'ति निषेधात् ।

**अजर्घाः**—अस्योत्तरं ४१ वर्षे द्रष्टव्यम् ।

ओढिढत्—अस्योत्तरं ४२ वर्षे 'औजिढत्' इत्यस्य साधुत्वावसरे द्रष्टव्यम् ।

२—'भूसुवोः' इति गुणनिषेध इति—अयम्भावः-'भूसुवोस्तिङि' इति गुणनिषेधे सिद्धे 'बोभूतु' इति गुणाभावनिपातनं छन्दस्येव गुणनिषेधो भवतीति नियमं करोति । एवञ्च यदि भाषायां यङ्लुक् न स्यात्तदा नियमस्य किमपि फलमेव नास्तीति यङ्लुक् भाषायामपि सिद्धो भवति । नच द्वित्वे कृते 'बोभू' इति समुदाये भूधातोरभावेन 'भूसुवोस्तिङि' इति सूत्राऽप्राप्तौ गुणाऽभावो निपातनीय एवेति वाच्यम्, षष्ठाध्यायीस्थसूत्रेण यद् द्वित्वं भवति तत्पुनरपि तस्यैवोच्चारणं भवति, नतु नवीनस्य द्वितीयस्य भूशब्दस्य 'द्विःप्रयोगो द्विर्वचनं षाष्ठम्' इति सिद्धान्तात् ।

इहरिस्शब्दस्य द्वित्वमित्यादि—अयमाशयः-'अरिरिषति' इत्यत्र ऋधातोः सनि तस्य इटि धातोर्गुणे च कृते 'अरिस्' इति स्थिते 'अजादेर्द्वितीयस्ये'ति 'रिस्' शब्दस्य द्वित्वे सलोपादिकार्ये कृते रूपं सिद्धं भवति । नचात्र 'द्विर्वचनेऽचि' इति निषेधाद्द्वित्वे कर्त्तव्ये गुणादेशो न स्यादिति वाच्यम्, इटो द्वित्वेन 'कार्यमनुभवन्' इति परिभाषया तस्य निमित्तत्वाऽयोगात् । अत्रेट एव द्वित्वं भवतीति कार्यित्वं वर्तते इति तस्य इटो निमित्तत्वेनाश्रयणं भवतीति 'द्विर्वचनेची'ति सूत्रन्न प्रवर्तत इति दिक् ।

एवञ्च अवगल्भत, इति—अयम्भावः-युद्धे योऽयं ग्रामशब्द इति व्याख्यानेन केवलग्रामशब्दस्य युद्धे शक्त्यभावात् संग्रामशब्दे लाभे 'तत्करोति' इत्यादिना णिचि संग्रामयते इत्यादि सिद्धौ चुरादौ 'संग्रामयुद्धे' इति सविशिष्टग्रामशब्दो व्यर्थीभूय 'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते' इति वचनं ज्ञापयति । तेन स्वमनायत उन्मनायते, उदमनायत इत्यादौ, तथा अवागल्भत, अवागल्भिष्ट, इत्यादावपि उपसर्गस्य पृथक्करणं फलं भवतीति बोध्यम् । अथ च ज्ञापकस्य सजातीयापेक्षत्वेन यत्रोपसर्गस्य सम्पूर्णरूपेण स्थितिस्तत्रैव पृथक्करणं भवति, यत्र तु गुणादेशेनोपसर्गस्यापहरणं भवति तत्र पृथक्करणं न भवति । ततश्च-ओढ इव आचर्येति विग्रहे आङः पृथक्करणाऽभावेन अव्ययपूर्वपदत्वाऽभावात् 'ल्यप्' न भवतीति फलम् । ज्ञापकस्य विशेषापेक्षत्वे 'उस्योमाङ्क्ष्वाटः प्रतिषेधो वक्तव्यः' इति वार्तिकं तत्प्रत्याख्यानपरकम् 'आटश्च' इति सूत्रे चकारग्रहणं च प्रमाणम्, अन्यथा 'औढीयति' इत्यादौ धातुसंज्ञायां कर्तव्यायामङः पृथक्करणेन 'ओमाङोश्च' इति सूत्राप्रवृत्तौ वार्तिकं व्यर्थमेव । एवंच पररूपादिका-

र्योप्रवृत्तौ पुनर्वृद्धिविधानार्थं चकारग्रहणमपि व्यर्थम् । 'आटश्च' इति सूत्रे चकार-ग्रहणम् 'आटश्च' इति वृद्धिविषये यद्यत् कार्यं प्राप्नोति तत्तत्सर्वं निवारयतीति चकारग्रहणेनैव पररूपन्न स्यादिति वार्तिकं निष्प्रयोजनमिति प्रत्याख्यातं भगवता ।

३—भ्रष्टुमिच्छति—इति विग्रहे विभ्रज्जिषति, बिभर्जिषति, बिभ्रक्षति, बिभर्क्षति, इति चत्वारि रूपाणि भवन्ति ।

पुनः पुनरतिशयेन वा कृन्तति—इति विग्रहे-चर्करीति, चर्कर्ति, चरिकर्ति, चरीकर्ति, इति रूपचतुष्टयं भवति ।

विद्वांसमाचष्टे—इति विग्रहे 'विद्वयति' इत्येके । 'विदावयति' इत्यन्ये ।

ईर्ष्यतेस्तृतीयस्येति—अयमाशयः—'ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्' इति वार्तिके तृतीयव्यञ्जनस्य तृतीयैकाचश्च द्वित्वं भवति । ततश्च तृतीयव्यञ्जनस्य द्वित्वपक्षे व्यञ्जनापेक्षया तृतीयव्यञ्जनं यकारस्तस्य द्वितस्य 'यि' इत्येकाचो द्वित्वे णिलोपे च कृते 'ऐर्ष्यियत्' इति रूपं सिद्ध्यति । तृतीयैकाचो द्वित्वपक्षेऽत्र तृतीयैकाचोऽभावेन वार्तिकाप्रवृत्तौ 'अजादेर्द्वितीयस्य' इति 'ष्य' शब्दस्य द्वित्वे यलोपादिकार्ये च कृते 'ऐर्षिष्यत्' इति रूपम् । एवञ्च 'ऐर्ष्यियत्' इति रूपसिद्ध्यर्थं वार्तिकम् । 'ऐर्षिष्यत्' इति तु-'अजादेर्द्वितीयस्य' इत्यनेनैव सिद्धमिति दिक् ।

सेनया अभियाति—इति विग्रहे-'अभिषेणयति' 'उपसर्गात्सुनोति'ति षः ।

४—मेधायति—'मेधा आशुग्रहणे' अस्मात् 'कण्ड्वादिभ्यो यक्' इति यकि 'सनाद्यन्ता' इति धातुत्वाल्लटि तिपि शपि पररूपे 'मेधायति' इति ।

अशिश्वीयिषति-अत्र 'यथेष्टं नामधातुषु' इति वार्तिकेन द्वित्वमिति विशेषः ।

निविशते—निपूर्वकविश्धातोर्लटि 'नेविशः' इति सूत्रेण आत्मनेपदे तप्रत्यये शपि पररूपे एत्वे 'निवशते' इति ।

प्रकुरुते—अत्र 'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः' इति सूत्रेण आत्मनेपदं भवति ।

बाष्पमुच्चरति—उपरिष्टाद्गच्छतीत्यर्थः । 'उदश्चरः सकर्मकात्' इति सूत्रे 'सकर्मकात्किम्' इत्यस्य प्रत्युदाहरणमेतत् ।

देवदत्तं प्रति शुश्रूषते—'प्रत्याङ्भ्यां श्रुवः' इति सूत्रे 'प्रत्याङौ' सोपसर्गौ एव गृह्येते तेन प्रस्तुतप्रयोगे 'लक्षणेत्थं भूते'ति प्रतेः कर्मप्रवचनीयसंज्ञात्वेन आत्मनेपदनिषेधो न भवतीति विशेषः ।

जनयति सुखम्—अत्र 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः' इति सूत्रेण पर-

स्मैपदमिति विशेषः ।

[illegible]—अत्र 'भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्' इति वार्तिकेन [illegible] चिण् न भवतीति विशेषः ।

अवारोधि—गौर्गोपेनेति शेषः । अत्र गोः कर्मणः कर्तृत्वविवक्षाया अभावात् 'न रुधः' इत्यनेन चिण् निषेधो नेति विशेषः ।

व्यकारिष्ट—अत्र 'णिश्रन्थिग्रन्थिब्रूञात्मनेपदाऽकर्मकाणामुपसङ्ख्यानम्' इति वार्तिकेन चिणि निषिद्धे ण्यन्तत्वाभावाच्चङभावे सिचि चिण्वदिटि वृद्धिः । चिण्वदिडभावपक्षे-'व्यकृत' इति भवति ।

५—सुप्तोऽहं किल विललाप—'विललाप' इत्यत्र 'परोक्षे लिट्' इत्यनेन लिट् । पारोक्ष्यमत्र चित्तविक्षेपादिना बोध्यम् ।

स्म पिता ब्रवीति—अत्र वाक्ये 'ब्रवीति' इत्यत्र 'अपरोक्षे च' इति सूत्रेण लट् भवति ।

शीघ्रं वप्स्यामः—अत्र 'क्षिप्रवचने लृट्' इति सूत्रेण लृट् भवति ।

अलं कृष्णो हस्तिनं हनिष्यति—'सम्भावनेऽलमिति चेत्सिद्धाऽप्रयोगे' इति सूत्रस्य प्रत्युदाहरणमेतत् । तत्र हि 'सिद्धाप्रयोगे' इत्यस्याऽभावे अत्राऽपि लिङि 'हनिष्यति' इत्यत्र 'हन्यात्' इत्यनिष्टापत्तिः स्यात् ।

भुञ्जीयेतोच्छ्रति—अत्र 'लिङ् च' इति सूत्रेण लिङ् भवति ।

वसन् ददर्श—अत्र 'धातुसम्बन्धे प्रत्ययाः' इत्यनेन भूते लट् ।

६—चिणणमुलोरिति—अस्योत्तरं ३६ वर्षे द्रष्टव्यम् ।

## अथवा प्रश्नोत्तरम् ।

धातोरित्यस्येति—'लुनाति' इत्यादौ लादेशव्यावृत्त्यर्थं 'धातोरि' त्यस्य आतृतीयाध्यायसमाप्तेरधिकारः ।

७—प्रयाणीयम्—प्रोपसर्गात् याधातोः 'तव्यत्तव्यानीयरः' इत्यनेन अनीयरप्रत्यये 'कृत्यचः' इत्यनेन नस्य णत्वे कृदन्तत्वात सौ तस्य अमादेशे पूर्वरूपे 'प्रयाणीयम्' इति जातम् ।

प्रेन्वनम्—'इवि प्रीणने' प्रोपसर्गादस्माल्लुटि तस्य अनादेशे गुणे कृदन्तत्वात सौ तस्य अयादेशे पूर्वरूपे 'प्रेन्वनम्' इति । अत्र 'इजादेः स नुमः' इत्यनेन णत्वस्त्वन्तु न, नुम् ग्रहणमनुस्वारोपलक्षणार्थमिति 'अट्कुप्वाङि'ति सूत्रेप्युक्तत्वात् ।

भृत्याः—अस्योत्तरं ४० वर्षे द्रष्टव्यम् ।

**प्रणाय्यः**—अत्र प्रोपसर्गात् णीधातोः 'प्रणाय्योऽसम्मतौ' इति सूत्रेण ण्यति वृद्धौ आयादेशश्च निपात्यते। ( अन्यत् सुगमम् )।

**अरविन्दः**—अस्योत्तरं ३८ वर्षे द्रष्टव्यम्।

**इरम्मदः**—अस्योत्तरं ४२ वर्षे द्रष्टव्यम्।

**दार्वाघाटः**—दार्वा हन्तीति 'दार्वाघाटः'। दारुशब्दे उपपदे आङ्पूर्वाद्धन्धातोः 'दारावाहनोऽणन्तस्य च टः संज्ञायाम्' इति वार्तिकेन अण्प्रत्यये सन्नियोगशिष्टेन टकारश्चान्तादेशे वृद्धौ यणि हस्य कुत्वे कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'दार्वाघाटः' इति।

**सोमसुत्**—सोमे कर्मण्युपपदे 'सोमे सुञः' इति सूत्रेण भूते सुनोतेः क्विपि तस्य सर्वापहारे 'ह्रस्वस्ये'ति तुकि प्रातिपदिककार्ये सुलोपे 'सोमसुत्' इति।

**विरेभितम्**—'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्ध' इत्यादिसूत्रेण निपातानात्सिद्धं भवति।

**धीतम्**—'धेट् पाने' अस्मात् क्तप्रत्यये 'घुमास्थे' तीत्वे 'दस्ति' इति सूत्रेण दीर्घे स्वादिकार्ये 'धीतम्' इति।

**उपेयिवान्**—'उपेयिवाननाश्वाननूचानश्च' इति सूत्रेण निपातनात्सिद्धं भवति।

**अर्हन्**—अस्योत्तरं ३८ वर्षे द्रष्टव्यम्।

**अद्मरः**—अद्धातोः 'सृघस्यदः क्मरच्' इत्यनेन क्मरच्प्रत्यये स्वादिकार्ये 'अद्मरः' इति।

**तृष्णक्**—'तृष्धातोः 'स्वपितृषोर्नजिङ्' त्यनेन नजिङ्प्रत्यये षत्वे कुत्वे स्वादिकार्ये 'तृष्णक्' इति।

१०—**काण्डलावः**—काण्डं लुनाति इति विग्रहे लुधातोः 'अण् कर्मणि च' इति सूत्रेण अण्प्रत्यये णित्वाद् वृद्धौ आवादेशे स्वादिकार्ये 'काण्डलावः' इति।

**निगारः**—नि-उपपदकगॄधातोः 'उन्न्योर्ग्रः' इति सूत्रेण घञि वृद्धौ स्वादिकार्ये 'निगारः' इति।

**पुष्पप्रचयः**—चौर्येणेति शेषः। 'हस्तादाने चेरस्तेये' इति सूत्रस्य प्रत्युदाहरणमेतत्। तत्र हि 'अस्तेये' इत्यस्याऽभावे अत्रापि घञि वृद्धौ 'पुष्पप्रचायः' इति स्यात्। ( 'पुष्पप्रचयम्' इत्येवोदाहरणमिति केचित् )।

**उन्मादः**—'मदोऽनुपसर्गे' इति सूत्रस्य प्रत्युदाहरणमेतत्। तत्र हि 'अनुपसर्गे' इत्यस्याभावे 'धनमदः' इतिवत् 'उन्मदः' इति स्यात्।

जागर्या—जागृधातोः 'जागर्तेरकारो वा' इति वार्तिकेन पाक्षिके अप्रत्यये कृते शित्त्वेन सार्वधातुकत्वात् यकि 'जाग्रोऽविचिण्णल्ङित्सु' इति गुणे स्वादिकार्ये 'जागर्या' इति।

धूत्वा—धूञ्धातोः 'समानकर्तृकयोः पूर्वकाले' इत्यनेन क्त्वाप्रत्यये 'स्वरति-सूतिसूयति' इत्यादिना इड्विकल्पे प्राप्ते 'स्वरत्यादेःश्र्युकः किती'ति नित्यमिड-भावः पूर्वविप्रतिषेधेन' इत्यनेन निषेधे विभक्त्यादिकार्ये 'धूत्वा' इति।

वितत्य—वि-उपसर्गात् तन्धातोः क्त्वाप्रत्यये तस्य ल्यपि कृते 'वा ल्यपि' इति सूत्रेण व्यवस्थितविभाषयाऽनुनासिकलोपविधानादत्र नित्यतया नलोपे 'ह्रस्व-स्ये'ति तुकि प्रातिपदिककार्ये 'वितत्य' इति।

आखनिकवकः—आङुपसर्गात् खन्धातोः 'खनेर्डडरेकेकवका वाच्याः' इति वार्तिकेन इकवकप्रत्यये स्वादिकार्ये 'आखनिकवकः' इति।

कथङ्कारम्—कथमुपपदात् कृधातोः 'अन्यथैवङ्कथमित्थंसु सिद्धाऽप्रयोग-श्चेत्' इति सूत्रेण णमुल्प्रत्यये वृद्धौ कथमो मकारस्यानुस्वारे परसवर्णे स्वादिकार्ये 'कथङ्कारम्' इति।

स्वपोषम्—धनेन पुष्णातीत्यर्थः। स्वशब्दोपपदात् पुष्धातोः 'स्वे पुषः' इति सूत्रेण णमुल्प्रत्यये गुणे स्वादिकार्ये 'स्वपोषम्' इति।

---

## णिजन्तादि-उत्तरकृदन्तान्तभागे प्रश्नाः

१९४७

१—पाणिणत्। ऊर्णुनुविषति। उचिच्छिषति। चञ्चूर्यते। अववर्ीः। जागृढः। एते प्रयोगाः समाधेयाः।

२—"यकारवकारान्तानां तूठ्भाविनां यङ्लुङ् नास्ति" "उपसर्गस-मानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते" अनयोः काप्येका फक्किका सविस्तरं व्याख्यायताम्।

३—पुनः पुनरतिशयेन वा वर्तते। दम्भितुमिच्छति। विद्वांसमाचष्टे। दरदमाचष्टे। एषु विग्रहेषु सिद्धान् प्रयोगान् सन्दर्श्य "णौ च संश्चङोः" इति सूत्रं कुत्र कुत्र पठितम्, तदर्थश्च कीदृशोऽङ्गी-कृत इति सोदाहरणं प्रदर्शनीयम्।

४—ईयते। चिचन्द्रीयिषति। व्यतिराते। समगत। अचुतत्। दृम्भ-

यन्ति सर्वे भक्ताः । अमार्चयिषाताम् । शम्यते मोहः । अभ्यस्त
वायेन । अन्योन्यं स्पृशतः । विशेषसूत्रोल्लेखपूर्वकमेतेष्वष्टौ प्रयोगाः
साध्यन्ताम् ।

४—कर्मवद्भावप्रयोजकं कर्मस्थक्रियाकत्वं सप्रयोजनं प्रतिपाद्यताम् ।

अथवा

आकर्मकत्वप्रयोजकानि सोदाहरणं संगृह्यन्ताम् ।

६—तत्तु करोमि भोः । पुरा यास्यति । वान्यमवाप्स्य । इन्द्रीति पलायते ।
त्वं स्माध्यापय । एषु लकारविशेषान् संसाध्य 'पुरीमवस्कन्द लुनीहि
नन्दन'मित्यस्य माघपद्यस्य वाक्यार्थौ निरूप्यताम् ।

७—आज्यम् । ओकः । अवहारः । गङ्गाधरः । नभस्वत् । ऋजुगम् ।
आत्मम्भरिः । पाणिन्धमः । उखास्रत् । अभिशीनम् । आसितः ।
एषु प्रयोगान् साधयत ।

८—नीवाराः । उषितम् । भूत्वा । निमार्गः । विगाह्य । उदित्वा ।
अजकनाशम् । गेहानुस्कन्दम् । विशेषसूत्रोल्लेखपुरस्सरमेतेषु
चत्वारः प्रयोगाः साध्यन्ताम् ।

९—वासरूपविधेस्तदनित्यत्वस्य च प्रमाणोदाहरणे निर्वर्णयत ।

## प्रश्नोत्तराणि ।

१—प्राणिणत्—अस्योत्तरं ४२ वर्षे द्रष्टव्यम् ।

ऊर्णुनुविषति—ऊर्णुधातोः सनि 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपि-सनाम्' इत्यनेन विकल्पेन इटि 'विभाषोर्णोः' इत्यनेन ङित्वपक्षे गुणाभावात् 'नु' शब्दस्य द्वित्वे उत्तरखण्डे उवङि च कृते सन्नन्तस्य धातुत्वाल्लटि 'तिपि' शपि पररूपे षत्वे 'ऊर्णुनुविषति' इति । ङित्वाभावपक्षे गुणाऽवादेशयोः ऊर्णुनवि-षति' इति । इडभावपक्षे 'न न्द्राः' इति निषेधात 'नुस्' शब्दस्य द्वित्वे 'इको झल्' इत्यनेन सनः किरवात् गुणाभावे 'अज्झनगमां सनि' इति दीर्घे 'ऊर्णुनूषति' इति ।

नन्वत्र परत्वात् गुणाऽवादेशयोः कृतयोः अभ्यासे उकारस्य श्रवणं न स्या-दिति चेन्न, 'द्विर्वचनेची'ति गुणनिषेधात् । नचात्र 'सन्यङोः' इति सन्नन्तस्य द्वित्वं प्रति कार्यित्वादिटो निमित्तत्वं न स्यादिति वाच्यम् , इटो द्वित्वरूपकार्य-

त्वाऽभावेन निमित्तत्वात्। अत्र 'सन्यङोः' इति सूत्रेण प्रथमतः सन्नन्तसमुदायस्य द्वित्वरूपकार्यं प्राप्तं भवति परन्तु "अजादेर्द्वितीयस्ये'ति बलेन नुशब्दस्यैव द्वित्वरूपकार्यं भवति नन्विटः। इत्थं च 'कार्यमनुभवन्नि'ति परिभाषाया अवसर एव नास्तीति भावः।

'यत्र कार्यमनुभवन् कार्यी प्रवर्तते तत्रैव कार्यी निमित्तत्वेन न स्वीक्रियते' इति परिभाषार्थः। अत्र 'यदागमाः'इति परिभाषया इड्रूपः सन् द्वित्वमनुभवति।

**उचिच्छिषति**—उच्छ्धातोः सनि सन्नन्तस्य धातुत्वाल्लटि तिपि शपि सनः इटि 'पूर्वत्रासिद्धीयमद्वित्वे' इति निषेधात् द्वित्वे कर्तव्ये श्चुत्वस्य निषेधाऽभावेन 'च्छिस्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'उचिच्छिस अ ति' इति स्थिते सकारस्य षत्वे पररूपे 'उचिच्छिषति' इति।

नचात्र 'निमित्तापाये'ति परिभाषया छलोपे सति तुकोऽपि निवृत्तिः स्यादिति वाच्यम्, 'आख्यानात' इत्यादिवार्तिके प्रकृतिप्रत्ययापत्तिवचनेन 'च्छ्वोः शूडनुनासिके च' इति सूत्रे तुग्विशिष्टछकारपाठेन च परिभाषया अनित्यत्वज्ञापनात्। यदि परिभाषायाः प्रवृत्तिः सर्वत्र स्यात्तदा छकारस्य शकारे कृते तुको निवृत्तिः परिभाषयैव स्यादिति सूत्रे तुग्ग्रहणं व्यर्थमेव। तदेव व्यर्थं सदुक्तपरिभाषाया अनित्यत्वे प्रमाणं भवतीति दिक्।

**चञ्चूर्यते**—गर्हितं चरतीति विग्रहे 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्' इत्यनेन यङि 'सन्यङोः' इत्यनेन द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'चरफलोश्च' इत्यनेन नुकि ततः परसवर्णे कृते 'उत्परस्यातः' इत्यनेन अभ्यासोत्तरखण्डस्याकारस्योत्त्वे 'हलि चे'ति दीर्घे धातुत्वाल्लटि तङि शपि एत्वे पररूपे 'चञ्चूर्यते' इति।

नचाऽत्र नुकि कृते झल्परत्वाऽभावेन अनुस्वाराऽभावात् परसवर्णः कथमिति वाच्यम्, 'नुगतोऽनुनासिकान्तस्ये'ति पूर्वसूत्रे 'यंयम्यते' 'रंरम्यते' इत्यादावनुस्वारश्रवणार्थं 'नुगित्यनुस्वारोपलक्षणमाश्रयणीयम्' इत्युक्तं भाष्ये, तस्यैवाऽत्र सूत्रेऽनुवर्तनादत्रापि तत्सिद्धेः। 'स च पदान्तवद्वाच्यः' इति पूर्वसूत्रस्थवार्तिकमप्यत्राऽनुवर्तत इति न विस्मर्तव्यम्।

**भववाः**—अस्योत्तरं ४५ वर्षे द्रष्टव्यम्।

**जागृढः**—'ग्रह उपादाने' अस्माद्यङ्लुकि धातुसंज्ञायां लुङि तसि 'ग्रहिज्ये'-

ति सम्प्रसारणे प्रत्ययलक्षणेन द्वित्वे अभ्याससंज्ञायां हलादिशेषे चुत्वे 'दीर्घो-ऽकितः' इत्यनेन अभ्यासस्य दीर्घे 'रुग्रिकौ च लुकि' इति रुगादयस्तु न, सम्प्रसारणस्य बहिरङ्गत्वेन असिद्धत्वात्। ततो हस्य ढत्वे तस्य षत्वे ष्टुत्वे ढलोपे षकारस्य रुत्वे विसर्गे 'जागृढः' इति।

२—यकारवकारान्तानामिति—अयम्भावः—'च्छ्वोः' इति सूत्रे किद्ग्रहणमनुवर्तते न वेति विचारे भाष्यकृता—"यदि किद्ग्रहणमनुवर्तते तदा प्रष्टा, प्रष्टुमित्यादौ 'च्छ्वोरि'ति सूत्राप्रवृत्तौ षत्वार्थं 'व्रश्चे'ति सूत्रे छकारग्रहणं कर्तव्यम्। अथ च यदि नानुवर्तते तदा पूर्वोक्तसूत्रेण शस्य छत्वे शान्तत्वादेव षत्वसिद्धौ 'व्रश्चे'ति सूत्रे छकारग्रहणं न कर्तव्यं भवतीत्येतावानेव विशेषः'' इत्यभिहितम्। इत्थञ्च यदि वान्तधातुभ्यो यङ्लुक् भवति तदा दिवुधातोर्यङ्लुकि इडभावपक्षे किद्ग्रहणानुवृत्तौ ऊठोऽभावे देदेति, देदेत्रीति रूपम्। अथ च यदि किद्ग्रहणस्य नानुवृत्तिस्तदा ऊठि 'देद्योति' 'देद्योषीति' रूपम्। एवं यान्तानामपि प्रयोगे भेदो बोध्यः। ततश्च प्रयोगेऽप्यपि भेदो वर्तत इति 'एतावानेव विशेषः' इति भाष्योक्तं निष्फलं स्यात्तस्मात् 'यकारवकारान्तानाम्' इत्यादिवचनं निस्सृतम्। परञ्चैतद्यङ्लुङ्निवर्तनं वान्तांशे यत्र 'च्छ्वोः' इत्यूठ् भवति तद्विषयकम्। 'ज्वरत्वर' इत्यादिसूत्रेण यत्रोठ् भवति तत्र यङ्लुग् भवत्येवेति युक्तम् माधवादीनां मतं च। च्छ्वोः' इति सूत्रे भाष्यकारेण विचारः कृतः तत्रैव च ऊठि कृतेऽकृते वा फलभेदो भवतीति तत्सूत्रविषयके ऊठ्येव यङ्लङ्नेति भावः।

उपसर्गसमानाकारमिति—अयम्भावः—युद्धे योयं ग्रामशब्द इति व्याख्यानेन केवलग्रामशब्दस्य युद्धे शक्त्यभावेन संग्रामशब्दस्य लाभात् 'तत्करोति' इत्यादिना णिचि 'सङ्ग्रामयते' इत्यादिसिद्धौ चुरादौ सङ्ग्रामयुद्धे इति विशिष्टग्रामशब्दो व्यर्थीभूय 'उपसर्गसमानाकारम्' इत्यादि वचनं ज्ञापयति। तेन 'स्वमनायत' इत्यादौ सूपसर्गस्य पृथक्करणं फलं भवति। अथ च ज्ञापकस्य सजातीयापेक्षत्वेन यत्रोपसर्गस्य सम्पूर्णरूपेण स्थितिस्तत्रैव पृथक्करणं भवति, यत्र तु गुणादेशेनोपसर्गस्यापहरणं भवति तत्र पृथक्करणन्न भवति। ततश्च ओढ इवाचर्येति विग्रहे आङः पृथक्करणाभावेन अव्ययपूर्वपदत्वाभावाल्ल्यब् न भवतीति फलम्। ज्ञापकस्य विशेषापेक्षत्वे—'उस्योमाङ्क्ष्वाटः प्रतिषेधो वक्तव्यः' इति वार्तिकं तत्प्रत्याख्यानप्रकारकम्, 'आटश्च' इति सूत्रे चकारग्रहणं च प्रमाणम्, अन्यथा 'ओढीयत्' इत्यादौ धातुसंज्ञायां कर्तव्यायामाङः पृथक्करणेन 'ओमाङोश्च' इति

सूत्राप्रवृत्तौ वार्तिकं व्यर्थमेव। एवञ्च पररूपादिकार्याप्रवृत्तौ पुनर्वृद्धिविधानार्थं चकारग्रहणमपि व्यर्थम्। 'आटश्च' इति सूत्रे चकारग्रहणम् 'अटश्च' इति वृद्धिविरुद्धं यद्यत् कार्यं प्राप्नोति तत्तत् सर्वं निवारयतीति चकारग्रहणेनैव पररूपक्त स्यादिति वर्तिकं निष्प्रयोजनमिति वार्तिकं प्रत्याख्यातं भगवता।

३—पुनः पुनरतिशयेन वा वर्तत इति—अस्योत्तरं ४५ वर्षे द्रष्टव्यम्।

दम्भितुमिच्छति—इति विग्रहे-दिदम्भिषति, धिप्सति, धीप्सति, इति त्रीणि रूपाणि भवन्ति।

विद्वांसमाचष्टे—अस्योत्तरं ४६ वर्षे द्रष्टव्यम्।

दरदमाचष्टे—'दारदयति' इति भवति। दरदिति कश्चिद्राजा, तस्यापत्यं दारदः।

णौ च संश्चङोरिति—इदं सूत्रं णिजन्तप्रक्रियायामेवोभयत्र पठितम्। तच्च षष्ठाध्यायप्रथमपादस्थं प्रथमम्। सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यादित्यर्थः। अशूशवत्-अशिश्वयत्' इत्युदाहरणे। अपरं द्वितीयाध्यायचतुर्थपादस्थम्। सन्परे चङ्परे च णौ इङो गाङ् वा स्यादित्यर्थः। अध्यजीगपत्-अध्यापिपत्' इत्युदाहरणे।

४—ईर्यते—अस्योत्तरं ४२ वर्षे द्रष्टव्यम्।

चिचन्द्रीयिषति—अस्योत्तरं ४२ वर्षे द्रष्टव्यम्।

व्यतिराते—लटि प्रथमपुरुषैकद्विबहुवचनेषु रूपमिदम्। अत्र 'कर्तरि कर्मव्यतिहारे' इत्यनेन आत्मनेपदं भवतीति विशेषः।

समगत—'समो गम्यृच्छिभ्याम्' इति सूत्रेण आत्मनेपदे कृते 'वा गमः' इत्यनेन कित्वं भवतीति विशेषः।

अद्युतत्—अत्र 'द्युद्भ्यो लुङि' इत्यनेन परस्मैपदमिति विशेषः।

दर्शयन्ति भवं भक्ताः—अत्र 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति सूत्रेण परस्मैपदमिति विशेषः।

अभावयिषाताम्—ण्यन्ताद् भूधातोर्भावकर्मणि लुङि प्रथमपुरुषद्विवचने चिण्वदिडभावपक्षे वलादिलक्षणे इटि तस्य अनाभीयत्वेन असिद्धत्वाभावादनिटीति निषेधाण्णिलोपाभावे णेर्गुणाऽयादेशयोः कृतयोः 'अभावयिषाताम्' इति।

शम्यते मोहः—शमधातोर्हेतुमरणौ उपधावृद्धौ अमन्तत्वेन मित्वाद् ह्रस्वे शमीत्यस्मात् कर्मणि लटि आत्मनेपदे तप्रत्यये यकि णिलोपे शपि पररूपे 'शम्यते' इति। अत्र भावे लट् तु न, हेतुमण्ण्यन्तस्य सकर्मकत्वात्।

अन्वतप्त पापेन—अस्योत्तरं ४१ वर्षे द्रष्टव्यम् ।

अन्योन्यं स्पृशतः—अत्र 'सकर्मकाणां प्रतिषेधो वक्तव्यः' इति वार्तिकेन कर्मवद्भावप्रतिषेधो भवति ।

६—ननु करोमि भोः—अस्योत्तरं ३७ वर्षे द्रष्टव्यम् ।

पुरा यास्यति—'यावत्पुरानिपातयोर्लट्' इति सूत्रस्य प्रत्युदाहरणान्तरमेतत् । अत्र पुर्शब्दस्य तृतीयैकवचनान्तं 'पुरा' इति तेन, अत्र याधातोर्लट् नेति ।

धान्यमवाप्स्म—देवः=मेघः, अवर्षीच्चेद्धान्यमवाप्स्म । अत्र 'आशंसायां भूतवच्च' इत्यनेन भूतवद्भावात् वप्धातोर्भविष्यति लुङि उत्तमपुरुषबहुवचने अवाप्स्मेति सिद्धं भवति ।

हन्तीति पलायते—'हेतुहेतुमतोर्लिङ्' इति सूत्रे लिङ्ग्रहणसामर्थ्यात् "भविष्यत्येवेष्यते" इत्युक्तत्वादत्र लिङ् न ।

त्वं स्माध्यापय—अस्योत्तरं ३७ वर्षे द्रष्टव्यम् ।

पुरीमवस्कन्देति—बली=रावणः, नमुचिद्विषा=इन्द्रेण सह, विगृह्य=विरोधं प्राप्य, पुर्याः=अमरावत्याः, अवस्कन्दनं=पीडनं, नन्दनवनस्य लवनं, रत्नानां मोषणम् , अमराङ्गनां हरणमित्येवं प्रकारेण अहर्दिवम्=अहन्यहनि, अस्वास्थ्यं चक्रे=कृतवानित्यन्वयः । इत्थं शब्द इति पर्यायोऽवस्कन्दनादिक्रियाविशेषाणामस्वास्थ्यक्रियासामान्येऽभेदं माहयति ।

७—आज्यम्—अस्योत्तरं ४० वर्षे द्रष्टव्यम् ।

ओकः—उच्धातोः 'इगुपधज्ञाप्रीकिरः कः' इति सूत्रेण कप्रत्यये 'ओक उचः के' इत्यनेन के परे निपातनात् उचेर्गुणकुत्वे स्वादिकार्ये 'ओकः शकुन्तवृषलौ' इति ।

अवहारः—अवोपसर्गात् हृधातोः 'श्याद्व्यधास्रुसंस्रतीणवसावहृलिहश्लिषश्वसश्च' इति सूत्रेण णप्रत्यये वृद्धौ कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'अवहारः' इति ।

गङ्गाधरः—नन्वत्र 'कर्मण्यण्' इति सूत्रेण अण् कुतो नेति चेन्न, कर्मणः शेषत्वविविक्षायां कर्मोपपदाभावात् । अणि कृते तु 'गङ्गाधारः' इति स्यात् ।

प्रख्यानीयम्—प्रोपसर्गात् ख्याधातोः अनीयर्प्रत्यये विभक्त्यादिकार्ये 'प्रख्यानीयम्' इति । 'कृत्यचः' इति णत्वं तु न,'चक्षिङः ख्याञ्' इति सूत्रे भाष्ये 'ख्याञः शस्य यो वा' इत्युक्तत्वात् यत्वस्याऽसिद्धत्वेन शकारव्यवधानात् ।

अनुद्यम्—नञि उपपदे सति वद्धातो 'वदः सुपि क्यप् च' इत्यनेन क्यपि 'वचिस्वपी'ति सम्प्रसारणे पूर्वरूपे विभक्त्यादिकार्ये 'अनुद्यम् वचनाऽनर्हं' 'गुरुनाम' इति शेषः। 'अवद्यपण्यवर्या गर्ह्यपणितव्याऽनिरोधेषु' इति सूत्रस्य गर्हेत्यस्य प्रत्युदाहरणमेतत्।

आत्मम्भरिः—आत्मानं बिभर्तीति विग्रहे 'फलेग्रहिरात्मम्भरिश्च' इति सूत्रेण भृञ् धातोरिन् प्रत्ययः, न लोपे सति मुमागमश्च निपात्यते। तत ऋकारस्य गुणे रपरत्वे विभक्त्यादिकार्ये 'आत्मम्भरिः' इति।

पाणिन्धमः—पाणयो ध्मायन्तेऽस्मिन्निति विग्रहे 'उग्रम्पश्येरम्मदपाणिन्धमाश्च' इति सूत्रेण निपातनात् सिद्धं भवति। तत्र हि शपि 'पाघ्राध्मे'ति धमादेश इति विशेषः।

उखास्रत्—उखायाः स्रंसते इति विग्रहे स्रंसधातोः 'क्विप् च' इति सूत्रेण क्विपि 'अनिदिता'मिति नलोपे 'वसुस्रंसुध्वं'सिति दत्वे चर्त्वे विभक्त्यादिकार्ये 'उखास्रत्' इति।

अभिशीनम्—अस्योत्तरं ३९ वर्षे द्रष्टव्यम्।

आसितः—आसितवानित्यर्थः। 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इति सूत्रेण चकारात् कर्तरि क्तप्रत्यये इटि स्वादिकार्ये 'आसितः' इति।

८—नीवाराः—नीत्युपपदे वृधातोः 'नौ वृ धान्ये' इति सूत्रेण घञ्प्रत्यये ञित्वाद्वृद्धौ 'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घे विभक्त्यादिकार्ये 'नीवाराः' इति।

उज्जिघ्रमम्—अस्योत्तरं ४१ वर्षे द्रष्टव्यम्।

भूत्या—अस्योत्तरं ४० वर्षे द्रष्टव्यम्।

विमार्गः—अस्योत्तरं ३७ वर्षे द्रष्टव्यम्।

विगणय्य—'वि' उपसर्गात् 'गण संख्याने' अस्मात् णिचि अतो लोपे 'विगणि' इति, तस्मात् क्त्वाप्रत्यये तस्य 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इत्यनेन ल्यपि णेरयादेशे विभक्त्यादिकार्ये 'विगणय्य' इति।

उदित्वा—वदधातोः क्त्वाप्रत्यये 'वचिस्वपी'ति संप्रसारणे पूर्वरूपे इटि 'मृडमृदगुधकुषक्लिशवदवसः क्त्वा' इति सूत्रेण किद्वद्भावात् गुणाऽभावे स्वादिकार्ये 'उदित्वा' इति।

अजकनाशम्—'उपमाने कर्मणि च' इति सूत्रेण नशधातोर्णमुल् प्रत्यये

णित्वाद् वृद्धौ विभक्त्यादिकार्ये 'अजकनाशम्' इति। अजक इव नष्ट इत्यर्थः।

गेहानुस्कन्दम्—'विशिपतिपदिस्कन्दां व्याप्यमानाऽऽसेव्यमानयोः' इति सूत्रेण स्कन्दधातोर्णमुल्प्रत्यये विभक्त्यादिकार्ये 'गेहानुस्कन्दम्' इति।

६—वासरूपविधेरिति—'वाऽसरूपोऽस्त्रियाम्' इति परिभाषया कोटकृत्य-संज्ञकप्रत्ययश्च पर्यायेण भविष्यतीति 'प्रैषादि' सूत्रे कृत्यग्रहणं स्त्र्यधिकारादूर्ध्वं 'वासरूपोऽस्त्रियाम्' इति सूत्रं क्वचिन्न प्रवर्तते इति ज्ञापयति। एवञ्च 'क्तल्युट्तुमुन्खलर्थेषु मिथो बाध्यबाधकभावो न भवती'ति वचनं सिद्धम्। तेन 'हसितं हसनम्' इति भावे विहितयोः क्तल्युट्प्रत्यययोर्विषये 'भावे' इति सूत्रेण घञ् प्रत्ययो न भवति। अथ च 'ईषत्पानः' इति खलर्थे खल्प्रत्ययश्च न भवतीति फलम्। अत्र लाघवात् 'शकि लिङ् च' इति सूत्रे चकारग्रहणेनैव पूर्वोक्तज्ञापनसम्भवे प्रैषादि' सूत्रे कृत्यग्रहणं न कार्यमिति दिक्।

---

## णिजन्तप्रक्रियाद्युणादिप्रकरणान्तभागे प्रश्नाः

### १६४८ प्रथमं पत्रम्

१—मा भवानिदिधत्। अध्यजीगपत्। दुद्यूषति। उचिच्छिषति। शाशाय्यते। अबोभूवुः। तोतोर्ति। एषु पञ्च प्रयोगाः साधनीयाः। ...१०

२—अप्सरायते। औजिढत्। स्थापयति। एतान् प्रयोगान् संसाध्य अपस्किरते वृषो हृष्टः। शास्त्रे नयते। पदं मिथ्या कारयते बोधयति पद्मम्। पाययते। एषां मध्ये त्रिषु प्रयोगेषु सूत्रनिर्देशपूर्वकं पदव्यवस्था प्रदर्शनीया। ...१०

३—आरिता। आहिता। गौः पयो दुग्धे। कृष्णश्चेद् भुङ्क्ते त्वं गाश्चारय। अपगिरिं शिरसा भिन्द्यात्। याहि याहीति याति। एषु चतुरः प्रयोगान् संसाध्य, 'धातुसम्बन्धे प्रत्ययाः' इति सूत्रं व्याख्यायताम्। ...१०

४—आचर्यो देशः। चेक्रियः। दिवाकरः। आढ्यङ्करणम्। सोमविक्रयी। क्षुब्धो मन्थश्चेत्। एषु चतुरः प्रयोगान् संसाध्य—फल्गुः। अजिरम्। स्थालम्। करभः। मञ्जूषा। पुरोधाः। एषां मध्ये चतुर्षु प्रयोगेषु प्रकृति-प्रत्ययनिर्देशः कर्तव्यः। ...१२

५—शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।

सरूपः अत्ययेः नेष्टः सन्नन्तान्न सनिष्यते ॥

अथवा

गौणे कर्मणि दुह्यादेः प्रधाने नी-हृ-कृष्-वहाम् ।
बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया ॥
प्रयोज्यकर्मण्यन्येषां णयन्तानां लादयो मताः ।
इति कारिका सोदाहरणं व्याख्येया ।

## प्रश्नोत्तराणि ।

१—माभवानिदिधत्—एध्धातोर्णिचि ण्यन्तस्य धातुत्वाल्लुङि तिपि च्ले-श्चङि 'एध् इ अ त्' इति स्थिते पूर्वम् उपधाह्रस्वे ततो 'धी'त्यस्य द्वित्वे अभ्या-ससंज्ञायां हलादिशेषे माङ्योगादाडभावे 'मा भवानिदिधत्' इति । नचाऽत्र 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया अन्तरङ्गत्वात् द्वित्वमेव पूर्वं स्यादिति वाच्यम्, ओणेर्ऋदित्करणेन बहिरङ्गस्याप्युपधाह्रस्वस्य प्राबल्यबोधनात् ।

यदि तु उपधाह्रस्वात् प्रागेव अन्तरङ्गत्वात् द्वित्वं स्यात्तदा 'ओण् इ अ त्' इति स्थिते णिशब्दस्य द्वित्वे 'णौ चङ्युपधायाः' इति ह्रस्वे कर्तव्ये चङ्परको णो णिस्तदव्यवहितमङ्गम् 'ओणिण्' इति तस्योपधाया दीर्घाभावेन ह्रस्वाप्राप्त्या ह्रस्वनिषेधार्थम् ओणृ धातोर्ऋकारोपादानं व्यर्थं स्यात् तदेव व्यर्थीभूय 'उपधा-कार्यं द्वित्वात् प्रबलम् इति ज्ञापयति ।

अध्यजीगपत्—अधिपूर्वादिङ्धातोर्णिचि तदन्ताल्लुङि तिपि अडागमे च्लेश्चङादेशे "णौ च संश्चङोः" इति इङो गाङादेशे पुकि उपधाह्रस्वत्वे 'अधि अ गप् इ अ त्' इति स्थिते 'गप्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'कुहो-श्चुः' इत्यनेन अभ्यासस्य चुत्वे सन्वद्भावे 'सन्यतः' इतीत्वे 'दीर्घो लघोः' इति दीर्घे यणि 'अध्यजीगपत्' इति । नचात्र णिज्निमित्तस्य गाङो द्वित्वे कर्तव्ये स्थानिवद्भावो निषेधो वा शङ्क्यः, यत्र अभ्यासोत्तरखण्डे आद्योऽजवर्णोऽस्ति तत्रैव स्थानिवद्भावो निषेधो वेत्युक्तत्वात् । इह तु गाङः पूर्वं सति हि द्वित्वे 'अ-जादेर्द्वितीयस्य' इति णिच एव द्वित्वं भवेत्ततः चङ्परणिज्निमित्तो गाङ् ततश्च प्रक्रियायां परिनिष्ठितरूपे वा अवर्णवदुत्तरखण्डं दुर्लभं कीर्तयतिसाम्यात् ।

'कुद्यूपति—अस्योत्तरं ४२ वर्षे द्रष्टव्यम् ।

रुचिच्छिषति— ,, ४१ ,, ,,

शाशय्यते—अस्योत्तरं ४२ वर्षे द्रष्टव्यम्।

अबोभुवुः—भूधातोर्यङ्लुकि द्वित्वादिकार्ये अभ्यासस्य गुणे च कृते धातुत्वात् लुङि 'सिजभ्यस्ते'ति झेर्जुसि 'अबोभू उस्' इति स्थिते 'जुसि चे' ति गुणं बाधित्वा नित्यत्वाद् वुकि सकारस्य रुत्वे विसर्गे 'अबोभुवुः' इति। नचात्र अभ्यस्ताश्रयजुसं बाधित्वा परत्वात् 'अदभ्यस्तात्' इत्यनेन अदादेशः कुतो नेति वाच्यम्, अभ्यस्ताश्रयजुसोऽदादेशापवादत्वात्।

तोतोर्ति—'तुर्वी हिंसायाम्' इति धातोः यङ्लुकि धातुत्वाल्लटि तिपि इडभावपक्षे द्वित्वादिकार्ये अभ्यासस्य गुणे च कृते 'तोतुर्वति' इति स्थिते 'राल्लोपः' इत्यनेन वलोपे 'तोतु र्ति' इति स्थिते उकारस्य लघूपधगुणे 'तोतोर्ति' इति। 'न धातुलोप आर्धधातुके' इति गुणनिषेधस्तु न, तिबादीनामनार्धधातुकत्वात्।

२—अप्सरायते—अस्योत्तरं ४३ वर्षे द्रष्टव्यम्।

औजिढत्— „ ४२ „ „

स्थापयति—स्थिरमाचष्टे इति विग्रहे 'तत्करोति तदाचष्टे' इति णिचि 'प्रियस्थिरे'ति सूत्रेण स्थिरशब्दस्य स्थादेशे वृद्धौ पुकि लटि तिपि शपि गुणे अयादेशे पूर्वरूपे 'स्थापयति' इति।

अपस्किरते वृषो हृष्टः—अत्र 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्' इति वार्तिकेन आत्मनेपदे सति 'अपाच्चतुष्पाच्छकुनिष्वालेखने' इति सूत्रेण सुड् भवतीति विशेषः।

शास्त्रे नयते—शास्त्रार्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः। अत्र 'णीञ् प्रापणे' अस्माद्धातोः 'संमानमोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' इति सूत्रेण आत्मनेपदं भवति।

पदं मिथ्या कारयते—स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः। अत्र 'मिथ्योपपदात्कृञोऽभ्यासे' इति सूत्रेण आत्मनेपदं भवति।

बोधयति पद्मम्—अत्र 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः' इति सूत्रेण परस्मैपदं भवति।

पाययते—अत्र न 'पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः' इति सूत्रेण 'निगरणचलनार्थेभ्यः' इति प्राप्तपरस्मैपदस्य निषेधो भवति।

३—आरिता—ऋधातोर्लुटि तिपि तासिप्रत्यये सलोपे तिपो डादेशे गुणे रपरत्वे कृते अजन्तत्वाऽभावेऽपि 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झ-

ग्रहदृशां वा चिण्वदिट् च' इति सूत्रेण चिण्वद्भावे इटि च कृते चिण्वद्भावाद्वृद्धौ 'आरिता' इति । पक्षे 'अर्ता' इति भवति ।

ग्राहिता—अत्र चिण्वदिटि कृते चिण्वद्भावाद् वृद्धौ 'ग्राहिता' इति । अत्र 'ग्रहोऽलिटि दीर्घः' इत्यनेन दीर्घस्तु न, वलादिलक्षणस्यैव इटः तेन दीर्घविधानात् । चिण्वदिडभावपक्षे तु 'ग्रहीता' इति ।

गौः पयो दुग्धे—स्वयमेव गौः पयो दुग्धे उत्सृजतीत्यर्थः । इति कर्मकर्तृविवक्षायां दुहधातोर्लटि स्वरितत्वेऽपि 'भावकर्मणोः' इत्यात्मनेपदे तादेशे एत्वे हस्य घत्वे तस्य धत्वे शपो लुकि 'दुग्धे' इति । यक् तु न, 'न दुहस्नुनमां यक्चिणौ' इत्यनेन निषेधात्

कृष्णश्चेद् भुङ्क्ते त्वं गाश्चारय—कृष्णभोजनकाले त्वं गाश्चारय इत्यर्थः । अत्र 'कोडर्थलक्षणे च' इति सूत्रेण भुङ्क्ते इत्यत्र विभाषया लड् भवति । पक्षे लुट्लृटावपि । कृष्णश्चेद् भोक्ता, भोक्ष्यते वा, त्वं गाश्चारय इत्यप्युदाहार्यम् ।

अपामार्गं शिरसा भिन्द्यात्—अस्योत्तरं ४५ वर्षे द्रष्टव्यम् ।

याहि याहीति याति—अत्र' क्रियासमभिहारे लोट्, लोटो हिस्वौ, वा च तध्वमोः' इत्यनेन लोट्, तस्य सर्वपुरुषवचनविषये परस्मैपदिभ्यः कर्तरि हिः, एवञ्च 'याही'ति । अत्र 'यथाविध्यनुप्रयोगः पूर्वस्मिन्' इति लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः, तत अनुप्रयोगात् यथा यथं लडादयास्तिबादयश्च भवन्ति । ततः संख्याकालयोः पुरुषविशेषार्थस्य चाऽभिव्यक्तिः । अत्र 'क्रियासमभिव्याहारे द्वे वाच्ये' इति द्वित्वे याहि याहीति याति, यातः, यान्ति, इत्यनुप्रयोगात् सर्वलकाराः सर्वपुरुषवचनानि च भवन्ति । पुनः पुनरतिशयेन वा एककर्तृकं वर्तमानकालिकं यानं यातीत्यर्थः । अत्र इति शब्दस्तु अभेदान्वये तात्पर्यं ग्राहयतीति दिक् ।

धातुसम्बन्धे प्रत्ययाः—धातोः सम्बन्धः धातुसम्बन्धः तस्मिन् धातुसम्बन्धे । धातुशब्देन धात्वर्थो लक्ष्यते । ततश्च धात्वर्थयोः सम्बन्धे सति प्रत्ययाः स्युरिति लब्धम् । कस्मिन्नर्थे इत्याकाङ्क्षायां 'काल' इति गम्यते, तत्र 'वर्तमाने लट्' इत्यादिभिः तत्तत्कालविशेषे प्रत्ययविधेस्ततोऽन्यस्मिन्काले इति गम्यते । तदाह मूले—धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युरिति । धात्वर्थानामित्यत्र उदाहरणबहुत्वाभिप्रायेण बहुवचनमुक्तं वृत्तिकृता ।

४—आचर्यो देशः—आङ्पूर्वात् चर्धातोः 'चरेराङि चाऽगुरौ' इति

वार्तिकेन यत्प्रत्यये 'अचो रहाभ्यां द्वे' इति द्वित्वे कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ सकारस्य रुत्वे विसर्गे 'आचर्य्यः' इति।

**चेक्रियः**—क्रीञ्धातोर्यङ्लुकि द्वित्वादिकार्ये 'चेक्री' इति, तस्मात् 'नन्दिग्रहि'इति पचादित्वाद् प्रत्यये 'चेक्री अ' इति स्थिते 'न धातुलोप' इति गुणनिषेधे संयोगपूर्वकत्वाद् गुणनिषेधे इयङि विभक्त्यादिकार्ये 'चेक्रियः' इति।

**दिवाकरः**—दिवा करोतीति विग्रहे 'दिवाविभा' इत्यादिसूत्रेण कृञ्धातोष्ट-प्रत्यये गुणे विभक्तिकार्ये 'दिवाकरः' इति।

**आढ्यङ्करणम्**—अस्योत्तरं ४१ वर्षे द्रष्टव्यम्।

**सोमविक्रयी**—सोमं विक्रीते इति विग्रहे 'कुत्सितग्रहणं कर्तव्यम्' इति वार्तिकेन 'वि' उपसर्गात् क्रीधातोः इनि प्रत्यये गुणे अयादेशे विभक्तिकार्ये सुलोपे नलोपे 'सोमविक्रयी' इति।

**क्षुब्धो मन्थश्चेत्**-'क्षुभ संचलने' अस्मात् 'क्षुब्धस्वान्तध्वान्त' इत्यादिसूत्रेण क्तप्रत्यये निपातनादिडभावे 'झषस्तथोः' इति धत्वे जश्त्वे स्वादिकार्ये 'क्षुब्धः' इति।

**फल्गु**—'फल निष्पत्तौ' अस्मात् 'फलिपाटिनमिमनिजनां गुकपटिनाकिधतश्च' इत्युणादिसूत्रेण गुक्प्रत्ययो भवति।

**अजिरम्**—'अज गतिक्षेपणयोः' अस्मात् 'अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः' इत्युणादिसूत्रेण किरचि प्रकृतेर्वीभावाभावो निपात्यते।

**स्थालम्**—स्थाधातोः 'स्थाचतिमृजेरालज्वालञालीयचः' इत्युणादिसूत्रेण आलच् प्रत्ययो भवति।

**करभः**—'कॄ विक्षेपे' अस्मात् 'कॄशॄशलिकलिगर्दिभ्योऽभच्' इत्युणादिसूत्रेण अभच्प्रत्ययो भवति।

**मञ्जूषा**—'टु मस्जो शुद्धौ' अस्मात् 'मस्जेर्नुम् च' इत्युणादिसूत्रेण ऊषन्प्रत्ययो नुम् च भवति।

**पुरोधाः**—पुरःशब्दे उपपदे धाञ्धातोः 'पुरसि च' इत्युणादिसूत्रेण असिप्रत्ययो भवति।

५—**शैषिकान्मतुबर्थीयादिति**—अस्योत्तरं ४५ वर्षे द्रष्टव्यम्।

**गौणे कर्मणीति**—अस्योत्तरं ४३ वर्षे द्रष्टव्यम्।

---

## उत्तरकृदन्तादि–लिङ्गानुशासनान्तभागे प्रश्नाः

१९४८ द्वितीयं पत्रम्

१—शक्नोति भोक्तुम्। उपाध्यायाः। काशीनिकायः। कीर्तिः। सुप्रलम्भः। विगणय्य। मूषिकाबिलग्रम्। मूलकेनोपदंशम्। गेहमनुप्रवेशमनुप्रवेशम्। एषामष्टौ रूपाणि ससूत्रविशेषकार्यनिर्देशं साधनीयानि। ...१२

२—परावनुपात्यय इणः, कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्, न क्तिचि दीर्घश्च, वा ल्यपि, कषादिषु यथाविध्यनुप्रयोगः, एषां सूत्राणां सोदाहरणमर्थाः लेख्याः। ...८

३—अक्रन्। तारिषत्। गुग्गुलूः। मावतः। श्री रुद्रेभ्यो अवपथाः। उरु णस्कधि। एमसि। तरुतारम्। उपरि स्विदासी ३ त्। एषु पञ्चानां सप्रमाणं सिद्धिं प्रदर्श्य–नोनयति०। वेशोयश०। मन्त्रे सोमाश्वेन्द्रिय०,। सुपां सुलुक्०,। तयोर्य्वावचि०—एषु चतुर्णां सूत्राणां सोदाहरणमर्थाः प्रदर्श्यन्ताम्। ...१२

४—नोदात्तस्वरितोदय०। त्यागराग०। तास्यनुदात्तेत्०। न भूताधिक०। नाचार्यराजर्त्वि०। निपातैर्यद्यदि०। एषु पञ्चानामर्थमुदाहरणानि च विलिख्य—तेऽवदन्। कर्णाभ्यां छुबुकादधि। चोदयित्री सूनृतानाम्। शङ्खश्यामा। सावर्णिमाण्डुकेयौ। कुसूलबिलम्। इन्द्राबृहस्पती। पुत्रासो यत्र पितरो भवन्ति। एषां षट्सु स्वरसिद्धिः प्रतिपाद्यताम्। ...१४

५—नाभि–रज्जु–अर्चिष्–अहन्–कुशा–नेत्र–शब्दानां लिङ्गमभिधीयताम्।४

## प्रश्नोत्तराणि

१—शक्नोति भोक्तुम्—अस्योत्तरं ३९ वर्षे द्रष्टव्यम्।

उपाध्यायः—उप–अधिपूर्वकात् इङ्धातोः 'इङश्च' इति सूत्रेण घञ्प्रत्यये उपधावृद्धौ आयादेशे यणि सवर्णदीर्घे कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ तस्य रुत्वे विसर्गे 'उपाध्यायः' इति।

काशी निकायः—नि–उपसर्गात् चिधातोः 'निवासचितिशरीरोपसमाधाने-

...देश्च कः' इति सूत्रेण घञि सन्नियोगशिष्टेन चकारस्य ककारे वृद्धौ आयादेशे स्वादिकार्ये 'निकायः' इति। काशी मोक्षार्जकस्य निवास इत्यर्थः।

कीर्तिः—'कृत संशब्दने' अस्मात् 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' इति सूत्रेण निपातनात् क्तिन्प्रत्यये ईत्वे स्वादिकार्ये 'कीर्तिः' इति।

सुप्रलम्भः—'न सुदुर्भ्यां केवलाभ्याम्' इति सूत्रस्थकेवलाभ्यामित्यस्य प्रत्युदाहरणमेतत्। सु-प्र-उपसर्गकलभधातोः 'ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्' इति सूत्रेण खलि 'उपसर्गात् खल्घञोः' इत्यनेन नुमि विभक्त्यादिकार्ये 'सुप्रलम्भः' इति।

वैगाण्य—अस्योत्तरं ४७ वर्षे द्रष्टव्यम्।

मूषिकाबिलम्—'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' इति सूत्रस्थ'अस्येति किम्' इत्यस्य प्रत्युदाहरणमेतत्। 'अस्ये'त्यनुक्तौ उपपदेऽपि ऊकारस्य लोपः स्यादिति भावः।

मूलकेनोपदंशम्-मूलकेन उपदंशं भुङ्क्ते इति विग्रहे 'उपदंशस्तृतीयायाम्' इति सूत्रेण णमुलि विभक्तिकार्ये सिद्धं रूपं भवति। 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति समासाऽभावे रूपमिदम्। ननु स्य अन्तस उर्मकदंशधातुयोगे मूलकस्य शब्दतः कर्मत्वाऽभावेन मूलकोपदंशयोः सम्बन्धाऽभावेन सामर्थ्याऽभावात् णमुल्प्रत्ययः समासश्चात्र कथमिति चेन्न, किमुपदश्य भुङ्क्ते इति कर्मणोऽपेक्षायां मुलकमुपदश्य भुङ्क्ते इत्यर्थेन समायाति कर्मत्वं मूलकस्य दंशधातुना सहार्थसम्बन्धस्य सत्त्वात्। यदि तृतीयायाः शब्दतः एवान्वये प्रत्यय इष्यते तर्हि 'करणे हनः' इतिवत् 'उपदंशः करणे' इत्येव ब्रूयात्। इत्थं च तृतीयाग्रहणसामर्थ्येन आर्थसम्बन्ध एवाऽभीष्टः। शब्दतस्तु मूलकं भुजिक्रियाम्प्रति करणमेव।

गेहमनुप्रवेशमनुप्रवेशम्—अत्र 'त्रिशिपतिपदिस्कन्दां व्याप्यमानाऽऽसेव्यमानयोः' इति सूत्रेण णमुलि विभक्त्यादिकार्ये सिद्धं रूपं भवति।

२—परावनुपात्यय इणः—परौ उपपदे इण्धातोर्घञ्, अनुपात्यये गम्ये इत्यर्थः। 'तव पर्यायः' इत्युदाहरणम्।

कर्मणि चेति—येन स्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्मण्युपपदे ल्युट् स्यादित्यर्थः। 'पयःपानं सुखम्' इत्युदाहरणम्।

न क्तिचि दीर्घश्च—अनिटां वनतितनोत्यादीनां च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे इत्यर्थः। यन्तिः, रन्तिः, वन्तिः, तन्तिः, इत्युदाहरणानि।

वा ल्यपि—अनुदात्तोपदेशानां वनतितनोत्यादीनामनुनासिकलोपो वा स्या-

ल्यपि इत्यर्थः । आगत्य, आगम्य, प्रणत्य, प्रणम्य, प्रहत्य, प्रमत्य, प्रवत्य, वितत्य, इत्याद्युदाहरणानि ।

कषादिषु यथाविध्यनुप्रयोगः—यस्मात् 'निमूलसमूलयोः कषः' इत्यारभ्य 'उपमाने कर्मणि च' इत्यन्तैः सूत्रैः णमुलुक्तः स एवानुप्रयोक्तव्य इत्यर्थः। 'निमूलकाषं कषति' इत्युदाहृतम् ।

३—अकन्—कृधातोर्लुङि झौ तस्य अन्त्यादेशे 'इतश्च' इतीकारलोपे अडागमे मध्ये च्लौ 'मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः' इति सूत्रेण च्लेर्लुकि 'अकृ अन्त्' इति स्थिते झेर्ङित्वाद् गुणाभावे यणि संयोगान्तलोपे 'अक्रन्' इति ।

५—नाभिः—क्षत्रियभिन्ने नाभिशब्दः स्त्रियाम्, अन्यत्र पुंसि प्रयुज्यते। अत एवाह मेदिनीकोशे—'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे' इति ।

रज्जुः—रज्जुशब्दः स्त्रियां वर्तते, समासे तु पुंसि च ।

अर्चिष्—अर्चिष्शब्दः स्त्रियां नपुंसके च वर्तते ।

ब्रह्मन्—ब्रह्मन्शब्दः पुंसि नपुंसके च वर्तते ।

कुशा—'दारुणि' अर्थे टावन्तः स्त्रीलिङ्गः कुशाशब्दः ।

नेत्र—नेत्रशब्दः पुँल्लिङ्गे नपुंसके च वर्तते ।

इति दरभङ्गामण्डलान्तर्गत 'तरौनी' ग्रामवासिपण्डितश्रीमदनन्तलालझा-शर्मात्मजश्रीरामचन्द्रझाव्याकरणाचार्यविरचिता व्याकरण-मध्यमाचतुर्थखण्डप्रश्नोत्तरावली समाप्ता ।



स्वरवैदिकका प्रश्नोत्तर 'स्वरवैदिकप्रश्नोत्तरी' नाम की पुस्तक में देखिये ।

मुद्रकः—विद्याविलास प्रेस, बनारस । २........

## सिद्धान्तकौमुदी-बालमनोरमा

वर्तमान विकट परिस्थिति में कागज का दुष्प्राप्य होने से सिद्धान्तकौमुदी-बालमनोरमा का कोई भी सम्पूर्ण संस्करण प्राप्त नहीं हो रहा था जिससे विद्यार्थी व अध्यापक लोगों की कठिनाई दिन दिन बढ़ती चली जा रही थी। परमात्माकी असीम कृपा से हमारा मनोरथ सफल प्रकाशित हो गया है। कारकान्त प्रथम भाग ५)

समासादि तद्धितान्त द्वितीय भाग ५) भ्वादि स्वराद्यन्त तृतीय भाग ३)

## सिद्धान्तकौमुदी जेबी-गुटका

### सूत्रसूची-धातुसूची-सूत्रांक-वार्तिकांक सहित

सिद्धान्तकौमुदीका ऐसा सुन्दर जेबी गुटका का मनोहर संस्करण यह प्रथम बार ही छपा है। प्रति दिन सिद्धान्त कौमुदी की आवृत्ति करना विद्यार्थियोंके लिये आवश्यक है। सुबह-शाम घूमते-फिरते समय तथा परदेश-यात्रा करते समय विद्यार्थियोंका बहुत ही समय व्यर्थमें व्यतीत होजाता है। अब जहाँ कहीं जाना हो इस संस्करण को जेब में रख लीजिये और जब चाहें सिद्धान्तकौमुदी की आवृत्ति किजीये। ३)

## लघुशब्देन्दुकला

### [ लघुशब्देन्दुशेखर-प्रश्नोत्तरी ]

इसमें परीक्षामें आने योग्य सभी प्रश्नोंके उत्तर ऐसे सरल तथा निर्दुष्ट परिष्कारों से युक्त लिखे गये हैं कि अभ्यास करलेने पर विद्यार्थी परीक्षामें पूरी सफलता प्राप्त कर लेगें तथा ग्रन्थ लगाने में भी विद्यार्थीको अत्यधिक सहायता मिलेगी ऐसा प्रशंसनीय संस्करण यह प्रथम बार ही प्रकाशित हुआ है। १।)

## परमलघुकला

### ( परमलघुमञ्जूषाप्रश्नोत्तरी )

प्रस्तुत संस्करण में परीक्षा में आने योग्य सभी प्रश्नों के उत्तर ऐसे सरल तथा निर्दुष्ट परिष्कारों से युक्त लिख दिये गये हैं कि-"एक पन्थ दो काज" याने ग्रन्थ लगाने में भी इस से आपको अत्यधिक सहायता पहुँचेगी और कण्ठस्थ कर लेनेपर परीक्षा में अधिक से अधिक नम्बर भी पासकेगें। १)

## मनोरमाशब्दरत्नप्रश्नोत्तरी

इसमें हर एक प्रश्नका उत्तर इस तरह लिखा गया है कि अभ्यास करलेने पर विद्यार्थी परीक्षा में पूरी सफलता प्राप्त कर लेंगे तथा ग्रन्थाशय का भी पूरा ज्ञान हो जायगा। प्रथम खण्ड ॥=) द्वि० तृ० खण्ड ।॥=)

---